॥ श्रीः ॥

# ॥ आशीर्वाद शतकम् ॥



श्री वाञ्छानाथ महाकवि विरचितम्
कुप्पा - श्रीयाञ्जनेय शास्त्रि रचितया
सुधासाराख्य व्याख्यया सहितम्

प्रकाशकम्
श्री कामकोटि कोशस्थानम्
४, फ्रान्सिस् जोसफ् स्ट्रीट, मद्रास्-१.

श्री श्री जगद्गुरु श्री काञ्ची कामकोटि पीठाधीश्वर
श्री श्री चन्द्रशेखरेन्द्र सरस्वती सद्गुरुचरणाः

श्री श्री जगद्गुरु श्री काञ्ची कामकोटि पीठाधीश्वर
श्री श्री चन्द्रशेखरेन्द्र सरस्वती सद्गुरुचरणाः
एतेषामादेशानुसारिणः श्री श्री जगद्गुरु
श्रीमज्जयेन्द्र सरस्वती श्री पादाश्च

॥ श्रीः ॥

श्रीमुद्रा

श्रीमत्परमहंस परिव्राजकाचार्यवर्य
श्रीमच्छङ्कर भगवत्पादप्रतिष्ठित
श्रीकाञ्ची कामकोटि पीठाधिप जगद्गुरु
श्रीमच्चन्द्रशेखरेन्द्र सरस्वती श्रीपादादेशानुसारेण
श्रीमज्जयेन्द्रसरस्वतीश्रीपादैः क्रियते नारायणस्मृतिः ।

तञ्जापुरीराज्ये प्रधानमन्त्रिपद मधिष्ठाय प्रसिद्धिमुपेयुषः श्रीगोविन्ददीक्षितस्य दौहित्रीपुत्रेण कुट्टिकविरिति प्रसिद्धेन श्रीवाञ्छेश्वरशर्मणा विरचितमाशीर्वादशतकं ब्रह्म-सरस्वती - विष्णुदशावतार - शिवाम्बालक्ष्म्यादि भगवन्मूर्तीः बाणचण्डादिभक्तान्, कैलासादिशैलान्, नवग्रहान्, गङ्गादिनदीः, वसिष्ठादिमुनीन्, काशीकाञ्चीसेत्वादिक्षेत्राणि, रामायणादि दिव्यग्रन्थांश्च स्रग्धरावृत्तभासुरैः तत्तद्देवतादि विशिष्टमहिमनिर्देशपूर्वकं स्तौति ।

एतत्स्तोत्ररत्नस्य आन्ध्रप्रान्तीयमछिलीपट्टणवासि - व्याकरणादिशास्त्राभिज्ञब्रह्मश्री कुप्पा. आञ्जनेय शास्त्रि महाशयेन संस्कृत

भाषायां कृता व्याख्या । तत्तच्छ्लोकान् तत्र तत्र निर्दिश्यमानदेवता-दिमहिमप्रतिपादक पुराणादिप्रमाण प्रदर्शन पुरस्सरं तत्तत्पदसंबन्धि-ललित पर्यायपद प्रदर्शन-भावाविष्करणादिद्वारा विवृणोति ।

आस्तिकाः आशीर्वादरूपेण प्रवृत्तस्यास्य ग्रन्थरत्नस्य एतद्व्या-ख्यासहितस्य पठनेन तत्तद्भगवन्मूर्तीः महिमज्ञानपूर्वकं स्तुन्वानाः निखिलान्यपि मङ्गलान्यवाप्नुयुरित्याशास्महे ।

यात्रास्थानम्<br>तणिकाचलक्षेत्रम्<br>(तिरुत्तणि)<br>विरोधकृदाषाढशुद्धसप्तमी

नारायणस्मृतिः

## विज्ञापना

स्वस्तिश्रीकीलकवत्सरे पौरप्रार्थनया पुनराययुः मच्चिलीपत्तनं श्री श्री परमहंसपरिव्राजकाचार्यवर्याः श्री कामकोटिपीठाधिपतयः श्री श्री चन्द्रशेखरेन्द्रसरस्वतीसंयमीन्द्राः। तद्दर्शनार्थं सन्निधिं प्राप्तं मां सानुग्रहं पश्यन्तः "आशीर्वादशतम्" इति बहुवारमुच्चरन्तः परिवारजनेनाऽऽनाय्य मह्यं दापयित्वा आज्ञामन्वगृह्णन्नस्य व्याख्यां रचयेति। तद्रचयिता श्रीवाञ्छनाथः पण्डितकवीन्द्रः बहुपुराणक्षेत्रमाहात्म्यादिमर्मज्ञः। तस्य कविता चातिप्रौढ। सोऽहं मन्दः। अथापि श्रीचरणानामाज्ञैव महद्भाग्यं मन्वानः तद्बलादेव कार्यं सेत्स्यतीति धृतवानस्मि श्रीचरणानामाज्ञां शिरसा। शतकेऽस्मिन् प्रायशः प्रतिश्लोकं पुराणगाथासम्बद्धमेव। गाथार्थं पुराणेष्वन्विष्यमाणेषु तास्ता गाथा अनायासेनैव समुपलब्धा मयेत्यधतः किं स्यादन्यन्निदर्शनं श्रीचरणानामाज्ञाबलस्य! "मूकं करोति वाचाल"मितीव अज्ञं मां प्रौढग्रन्थव्याख्यातारं रचितवद्भ्यः श्री सद्गुरुचरणेभ्यः कृतज्ञतापूर्वकमारचये परश्शतान् साष्टाङ्गदण्डप्रणामान्। नव्यश्रीचरणेभ्यः श्री-प-प-श्री श्री जयेन्द्रसरस्वतीस्वामिश्रीचरणेभ्य आप्रथमदर्शनान्मामनुगृह्णद्भ्यः एतद्व्याख्याने सानुग्रहं मां प्रोत्साहितवद्भ्यः आरच्यन्ते परश्शतानि नमांसि। दाक्षिणात्यक्षेत्रगाथाः स्कान्दादिपुराणेष्वनुपलभ्यमानास्त - तत्क्षेत्रमाहात्म्यस्थाः प्रदर्श्य संश्राव्य च

बहूपकृतवद्भ्यः श्री-प-प-श्रीश्री मदनन्तानन्देन्द्रसरस्वती स्वामिचरणेभ्यो घटयामि बहून् प्रणामाञ्जलीन् । साहित्यविद्यां व्याकरणादिशास्त्राणि चानुगृहीतवद्भ्यः परमकृपालुभ्यः श्रीपालपर्त्याञ्जनेयशास्त्रि श्रीवेदुलसूर्यनारायणशास्त्रि श्री श्रीपाद लक्ष्मीनृसिंहशास्त्रि श्रीदेन्दुकूरिनरसिंहशास्त्रिप्रभृतिभ्यो विद्यागुरुवरेण्येभ्यो रचयामि नमश्शतानि। शतकेऽस्मिन् केचन पाठा अनन्विता इति मया परिवर्तिताः। तेषु व्याख्यायामस्यां च पतितान् दोषान् शोधनाय पुनर्मुद्रणे श्रीमठं प्रति प्रापयन्त्विति साञ्जलिबन्धमभ्यर्थये क्षमासिन्धून्विद्वद्वतंसान् ॥

एव

श्री सौम्यसं
श्रावणबहुल
पञ्चमी इन्दुवासरः

कुप्पा श्री याञ्जनेय शास्त्री,
खोज्जिल्लिपेट
मचिलीपट्टनम्, आन्ध्रप्रदेश

## ॥ श्रीवाञ्छानाथ कविचरितम् ॥

अस्य आशीर्वादशतकस्यकर्ता वाञ्छेश्वरः प्रख्याततञ्जाराज्यमन्त्रिवर्यस्य गोविन्द दीक्षितस्य दौहित्र्याः पुत्रः ।

श्रीगोविन्द दीक्षितेन्द्रः तञ्जापुर्यामभिषिक्तस्य अच्युतरायमहाराजस्य राज्यपालने प्रधानमन्त्री आसीत् ।

अच्युत भूपोऽपि दीक्षितेन्द्रमर्घासनदानेन सभाजयतिस्म । ययोः अच्युता नन्तगोविन्द इति भगवतः त्रिषु प्रसिद्धेषु पुण्यनामसु आद्यन्तनामभूतयो राज्यपरिपालनश्रीः अधुनापि कावेरीतीरवासिभिः एतत् श्लोकरूपेण संस्तूयते

त्रिनामाद्यन्तनामानौ महीक्षिद्दीक्षितावुभौ ।
शस्त्रे शास्त्रे च कुशलौ आहवेषु हवेषु च ॥ इति ।

अच्युतोऽपि स्वपितरमनुसरन् स्वपुत्ररघुनाथनायके प्राप्तयौवने राज्यभारमारोप्य प्रायः १५९७ तमे क्रिस्ताब्दे श्रीरङ्गक्षेत्रमशिश्रियत् ।

अस्य दीक्षितवरेण्यस्य तत्पालितवंशस्य च उदन्तः श्रीमद्दीक्षितेन्द्रसूनुना यज्ञनारायणयायजूकेन विरचिताभ्यां साहित्यरत्नाकररघुनाथविललासनामभ्यां काव्यनाटकाभ्यां ज्ञायते। तत्र नाटके इमं श्रीगीविन्द दीक्षितेन्द्रं युवानं रघुनाथमहाराजं च एकसिंहासनस्थौ निर्दिश्य एवं उपश्लोक्यते—

अस्य श्रीरघुनाथभूवलरिपोरध्यासितार्धासनः प्रज्ञावैभवखंडित प्रतिवदत्पाषण्डषण्डस्मयः । कुर्वन् व्याक्रिययातिविश्रुततरं कौमारिलं दर्शनं । गोप्ता नित्यगवीरसौ विजयते गोविंदयज्वाग्रणीः ॥ चत्वारः

कृतसर्वतोमुखमहासत्रेण गाढं शिला यूपा येन निखानिताः प्रतिदिशं युक्तं चिरावस्थितेः। सौराज्यं रघुनाथभूमिपतिना संप्रापिते क्ष्मातले पारेसह्यसुतं वृषेण वसता पादा इव स्थापिताः॥ इति।

अयं दीक्षितेन्द्रः कौमारेऽलं दर्शनं व्याचख्याविति तत्र एव अवगम्यते। तथा अनेन रघुनाथनृपाङ्कितः सङ्गीतसुधानिधिरिति कश्चित् सङ्गीतशास्त्रग्रन्थोऽपि निरमायीति तत्पुत्रवेङ्कटेश्वरमखिकृत सङ्गीतशास्त्रग्रन्थात् अवगम्यते। अयं सङ्गीतसुधानिधिः श्रीमदप्पय्य दीक्षितेन्द्रैः स्वकृतयादवाभ्युदयव्याख्यायां श्रीकृष्णवेणुगानगतस्वर निरूपणावसरे "तथाच सङ्गीतसुधानिधिवचनानि" इति उद्धृतो वर्तते। किञ्च दीक्षितेन्द्रस्य षट्सु दर्शनेषु पांडित्यमनुपममिति संभावयामः। तथाच साहित्यरत्नाकरे "अद्वैतविद्याविभवावलम्बान् गोविंदयज्वेन्द्रगुरूनुपासे। निर्मथ्य षड्दर्शननीरधीन् ये धियैव सारान् ददते बुधेभ्यः" इति।

अस्य दीक्षितेन्द्रस्य ज्यायान् पुत्रो यज्ञनारायणदीक्षितः। स पातञ्जलादि दर्शनेषु कृतदृढपरिश्रमोऽपि स्वस्य कवितावियायां प्रेमातिशयमाविष्करोति। तथाहि "पातञ्जलं भाट्टमतं च तर्कमद्वैत राद्धान्तमवैमि किं तैः। प्रबन्धसंदर्भभरैः कवित्वविद्यामिदानीं प्रकटी करोमि॥ इति।

श्रीमद्दीक्षितेन्द्रस्य कनीयान् पुत्रस्तु वेङ्कटेश्वरमखी यो वार्तिकाभरणाभिधया भट्टवार्तिकटुप्टीकाव्याख्यया लोके प्रथते। तस्यैव

शिष्यः सुप्रसिद्धनीलकण्ठदीक्षितः । अयं नीलकण्ठदीक्षितस्तमेव स्वगुरुत्वेन स्तौति स्वकृतगङ्गावतरणकाव्ये । यथा ।

वार्तिकाभरणग्रन्थनिर्माणव्यक्तनैपुणः श्रीवेङ्कटेश्वरमखी शिष्ये मय्यनुकम्पते ॥ कुर्वती श्रवणे वाणी कोमलां यस्य साहितीम् । कर्णपूरशिरीषेऽपि काठिन्यमिव पश्यति ॥ भान्ति शिष्याः पुरो यस्य पाणिविन्यस्त पुस्तकाः । तत्सूक्तिजाह्नवीपूरत्रासेनेव धृतप्लवाः ॥ इति । (गङ्गावतरण १, ५१ ५३ काव्यमालाग्रन्थावलिः ७६)

सुप्रसिद्धरत्नखेटदीक्षितपुत्रो राजचूडामणिदीक्षितोऽपि स्वकृते तन्त्रशिखामण्याख्ये पूर्वमीमांसाग्रन्थे अस्य वेङ्कटेश्वरमखिनः आश्रितं भक्तञ्च आत्मानमाचष्टे । स्वाचार्येणैव चोदितो निबबन्ध तन्त्र-शिखामणि मिति राजचूडामणि दीक्षितो वदति । तत्र स्वगुरुकृतान् ग्रन्थांश्च परिगणयति । तथाहि —

अस्तिगोविंदयज्वेन्द्रो नागमाम्बातपः बलम् । श्रीवेङ्कटेश्वर-मखी सर्वतन्त्रस्वतन्त्रधीः ॥ येनेष्टं साग्निचित्याप्तवाजपेयादिभिर्मखैः । कृतं साहित्यसाम्राज्य नाम काव्यमनुत्तमम् ॥ व्यतानि शुल्वमीमांसा तथा कर्मान्तवार्तिकम् । टुप्टीका यः कृताटीका वार्तिकाभरणाभिधा ॥ प्रतिष्ठापितचोलक्ष्माजानेस्तस्य नियोगतः । चूडामणिर्वितनुते यज्वा तन्त्रशिखामणिम् ॥ गोविंददीक्षितचिरंतनभाग्यराशेः श्रीवेङ्कटेश्वर-मखीशितुराज्ञया मे । तन्त्रार्णवं तारितुमाहितसाहसस्य सांयात्रिको भवतु तत्करुणाकटाक्षः ॥ इति ।

(Adyar Library Ms. No. XXXVIII, B. 8 — PP 1-2)

अत्र परिगणितेषु ग्रन्थेषु अनन्तर्भूतः चतुर्दंडि प्रकाशिकाभिधः कश्चित् सङ्गीतशास्त्रग्रन्थोऽपि वेङ्कटेश्वरमखिना कृतं इति ज्ञायते। अयं ग्रन्थः मुम्बईमंडले (Bombay) विष्णुनारायणभट्कुंडे B. A. L. L. B. अनेन महाशयेन मुद्रापितो दृश्यते।

गोविंददीक्षितवंशवाञ्छेश्वरयज्ववंशयोश्च सम्बन्धः

आस्तामिदं गोविंददीक्षितवंशचरितम्। तत्तादृशगोविंददीक्षितेन्द्रवंशेनास्मद्ग्रन्थकर्तृवंशः कथमनुबद्ध इति किञ्चिदिव प्रस्तूयते। ग्रन्थकर्तुः पुत्रः कुट्टिनरसिंहशास्त्री कदाचित् स्वपितृकृतग्रन्थेष्वन्यतमस्य ग्रंथस्यान्ते "इति गोविंददीक्षितवंश्यस्यश्रीवाञ्छेश्वरयज्वनः कृतौ" इति लिखितं दृष्ट्वा समशयिष्ट यत् वयं कामकायन विश्वामित्र गोत्रीयाः, गोविंददीक्षितेन्द्रादयस्तु उपमन्युवासिष्ठगोत्रीयाः, कथ मस्म त्तातपादस्य तद्वंश्यत्वं घटेत इति। तस्मात् अस्मत्पूर्वपूरुषाः गोविंददीक्षितेन्द्रदौहित्रीवंश्या एव स्युः इत्यतर्कि कुट्टिनरसिंहशास्त्रिणा। अयं तर्कः साधुरिति निश्चिनुमः। श्रीकाञ्चीकामकोटिपीठाधिपानां मठीयपुस्तकालये समुपलब्धात् एकस्मात् पुस्तकात्, यत्रैवं स्पष्टं प्रत्यपादि। भाट्ट चितामणिकर्तुः श्रीवाञ्छेश्वरयज्वनः प्रपितामहः महिषशतककर्ता वाञ्छेश्वरापराभिधः सुप्रसिद्धः कुट्टिकविः श्रीगोविंददीक्षितमन्त्रिणां दौहित्रीपुत्र इति।

अपरमपि विषयं तस्मात् कोशादवगच्छामः यत् शालिवाहन शके १६४२ (=१७२०. A. D. विकारिनाम वत्सरे श्रीकाञ्ची

कामकोटि पीठस्य कुम्भगोणानयनात् प्राक् श्रीकाञ्चीमेवाधिष्ठितवन्त आचार्या अहोबलनामानं कञ्चिन् यज्वानं श्रीचन्द्रमौलीश्वराराधनोप युक्ताचार्याग्रसंभावनासंग्रहार्थमविच्छेदेन तादृशधर्मप्रचारार्थं तत्तद - ग्रहार महाजनसम्मतिपत्रिकाग्रहणार्थञ्च चोलदेशीयग्रामान् प्रति प्राहिण्वन् । तेन यज्वना प्रतिग्राम स्वीकृताः सम्मतिपत्रिकास्तस्मिं-स्तालपत्रपुस्तके संगृहीता उपलभ्यन्ते । तदा तिरुविशल्लूरु अग्रहार-वासिनो महाजना बहवः पद्यात्मनैव सम्मतिं ददुः । तेषु सुप्रसिद्धा एते अत्राभिधान मर्हन्ति ।

१) बहुग्रन्थनिर्माता अय्यावाळु इति प्रसिद्धः श्रीधर वेङ्कटेश्वरः ।

२) सुप्रसिद्धस्य पंडितरामचन्द्रशास्त्रिवर्यस्य, काशीस्थितद्र-विड लक्ष्मणशास्त्रिवर्यस्य च पूर्वपुरुषो वीरराघवदीक्षितः ।

३) प्रकृतव्याख्याकर्तुः प्रपितामहः कुट्टिकविः वाञ्छेश्वरः ।

४) गोविंददीक्षितदौहित्रः तिरुमलमखी ।

५) अस्य तिरुमलमखिनो यो ज्यायान् सोदरः अय्यवारुमखी तस्य पुत्रः लक्ष्मीपतिः ।

तत्र कुट्टिकविः वाञ्छेश्वरः, तिरुमलमखी ; लक्ष्मीपतिश्च त्रयो मिलित्वा सम्मतिमावेदयन् द्वाभ्यां श्लोकाभ्याम् । तौ च श्लोकौ—

"वृत्तिं शाश्वतिकीमशेषविदुषां पञ्चाग्रहारात्मना यश्चक्रेऽनु-कवेरकन्यमयजद्यो द्वादशाहादिभिः । पुत्रस्तस्य किलाय्यवारुमखिनो

लक्ष्मीपतिः श्रीमहा देवेन्द्रस्य जगद्गुरोः प्रथमतः संमन्यते शासनम् ॥ तिरुमलमखी तस्य भ्राताऽय्यवारुमखीशितुर्दुहितृतनयस्य श्रीगोविंददीक्षित-मन्त्रिणाम् । अपि च भगिनीपुत्रो वाञ्छेश्वरोऽपि तदाज्ञया सविनय-मिमामत्र पूजां स्वयं बहुमन्यते ॥'' इति ।

जानीमोऽस्मात् सम्मतिपत्रात् अय्यवारुमखी तिरुमलमखी च गोविंददीक्षितमन्त्रिणां दौहित्रौ ; वाञ्छेश्वरस्तु तेषां दौहित्रीपुत्र इति । तथा अयमय्यवारुमखी कवेरकन्यामनु एषां विदुषां शाश्वतवृत्तिं कल्पयन् पञ्चाग्रहारान् ददौ ; आजहार च स्वयं द्वादशाहादिक्रतून् ; आरुरोह च स्वर्गमेतत्सम्मतिपत्रदानसमये इत्यपि प्रतीमः । तदेव मस्मद्ग्रंथकृद्वंशः प्रख्यातमहनीयचरित श्रीगोविंद दीक्षितेन्द्रवंशेनानु-बद्ध इत्यभिहितं भवति ।

### महिषशतककर्ता वाञ्छेश्वरः

1675 तमे खिस्ताब्दे श्रीमहाराष्ट्रराज्यस्थापनधुरीण श्रीशि-वाजि महाराजस्य सोदरः वङ्काजिवीरः तञ्जापुरीमाक्रम्य महाराष्ट्रराज्यं तत्र प्रावर्तयत् । तद्वंशोत्पन्नः श्रीशहजि महाराजः १६८७ तमे खिस्ताब्दे पट्टाभिषिक्तो राज्यमकार्षीत् । (१७११ तमखिस्ताब्द पर्यंतम्) । सः स्वयं महापंडितः सरसकविश्चेति तत्कृतग्रंथेभ्यः तद्विषयकग्रंथेभ्यश्च ज्ञायते ये तञ्जापुर्यां सरस्वतीग्रंथमहालये समु-पलभ्यंते । तेनोदारचरितेन महाराजेन दत्ता बहवोऽग्रहाराविप्राणा-मधुनापि राजंते । तेषु ललामभूतः शहजींद्रपुरापराभिधः तिरुविश-लूरु अग्रहारः यः कुम्भघोणनगर्याः क्रोशद्वयदूरे कावेरीतटनिकटे

तच्छीकरशीतलः सुच्छायः सुतरामाभाति । यमुपवर्णयति प्रकृतभाट्ट-चिंतामणिकारः स्वव्याख्यारम्भ एवम्—

"श्रीशहाजेन्द्रपुरे श्रीश हर अज इन्द्रविषयैः सदृशे" इति । श्लोकेऽस्मिन् शहराजेन्द्रपुरं ब्रह्मविष्णुमहेश्वराणां लोकसदृश-तयावर्ण्यते । तस्याग्रहारस्यप्रतिग्रहीतृषु अन्यतमः कुट्टिकवेः वाञ्छेश्वरस्य पितापीति तद्ग्रामशासनपट्टिकातो ज्ञायते । ततः प्राक तद्वंशः श्रीवाञ्छीक्षेत्रे कृतवासोऽभूत् । यत् क्षेत्रम्—

श्वेतारण्यं पञ्चनदं गौरीमायूरमर्जुनम् । छायावनं च श्रीवा-ञ्छ्यंकाशीक्षेत्रसमानिषट् ॥" इत्यभियुक्तैःकाशीतुल्यतया गीयते । अत एव तद्वंश्यानांकेषाञ्चित् वाञ्छेश्वर इतिनामतत्क्षेत्रस्मारकतयैवा कारि इति संभावयामः ।

अयं हि वंशः होसलकुलसमाख्यः कर्णाटककुलेष्वन्तर्भूतः तञ्जापुर्यां भोसलकुलीनानां वह्काजिप्रभृतीनां महाराष्ट्रभूपालानां पारंपर्य क्रमेणामात्यपदमध्यतिष्ठदिति कुट्टिकविकृतमहिषशतकात् (आद्य श्लोक द्वयात्) वाञ्छेश्वरयज्यकृतव्याख्यानाच्चावगम्यते ।

तद्वंश्यानां महिषशतककर्तृ वाञ्छेश्वरादीनां अद्य यावत् स्वा-साधारणनामतो नामांतरं व्यावहारिकं बालापरपर्यायकुट्टिपदोपपदं दृश्यते । इदं प्रथमतया तु वाञ्छेश्वरस्य महिषशतककर्तुः 'कुट्टि-कविः' इति नाम श्रीशहजिमहाराजेनादायीति कथा श्रूयते । तथाहि-महाराजः कदाचित् सपरिवारः समेत्य मथुरानगरीं तत्रांबिकां

श्रीमीनाक्षीं द्रष्टुकामो देवालयमाससाद । गत्वा च तत्रांबिकादर्शनावसरे श्लोकेनानेनाभितुष्टाव श्रीमीनाक्षीम् ।

पुरि मधुरं गिरि मधुरं गरिमधुरन्धरनितम्बभाराढ्यम् । स्थूलकुचं नीलकचं बालकचन्द्राङ्कितं तेजः ॥ इति ॥ श्रुत्वैतत्पद्यं महाराजस्यास्थानपंडितेन स्वपित्रा सहानुयातो नातीतकौमारो वाञ्छेश्वरो राज्ञो भक्तिपारम्यमतिसरससरलकविता नैपुण्यंचानुविचिन्त्य तदुत्थमानंदं स्वहृदये परिमातुमशक्नुवन् सन्नुद्गिर न्निवेदं पद्यमनुपदमेव जगौ—'हृदि तरसा विदितरसां तदितरसाहित्यवाङ्नमेलगति । कविलोके न विलो के भुवि लोकेशस्य शाहजेरुपमाम् ॥ इति एवमुत्तरक्षणे गीतमात्मश्लोकोपश्लोकनपरं मधुरं पद्यमाकर्ण्य महाराजः अतिमात्रविस्मयाविष्टः तस्य बालभावमनुरुध्य महता प्रेम्णा "कुट्टिकविः" इति तमाजुहाव इति । तस्य कुट्टिकवेः श्लेषकविसार्वभौम इति बिरुदमपि प्रथते । तस्य कृतिषु त्रीणि शतकानि उपलभ्यंते—

(१) महिषशतकम् ; (२) धाटीशतकम् ; (३) आशीर्वादशतकम् इति । महिषशतके तृतीये श्लोके स्वकालीनाः प्रभवः चत्वारः परिगणिताः । यथा—" नानाजिप्रभुः चन्द्रभानुः शहजींद्रः ; आनंदरायादयो विद्वांसः प्रभवो गताः श्रितसुधीसंदोहजीवातवः । विद्यायां विषबुद्धयो हि वृषलाः सभ्यास्त्विदानींतनाः । किं कुर्वेऽम्ब कृषे व्रजामि शरणं त्वामेव विश्वावनीम् इति । एषु प्रभुषु अंतिमः आनंदरायः (प्रायः 1655-1730 A. D.) आनंदरायाभ्युदयकाव्यात् प्रसिद्धः पंडितलोकानाम् । तृतीयः शहजि महाराजस्तु

सुप्रसिद्ध एव । द्वितीयश्चंद्रभानुः प्रथमो नानाजिप्रभुश्च न ज्ञायेते । एते चत्वरोऽपि श्रहिषशतकनिर्माणकाले दिष्टं गता इत्यु दाहृतश्लोकादवगम्यते ।

1642 तमे शालिवाहनशके (= 1720 तमे खिस्ताब्दे) विकारि वत्सरे यदा वाञ्छेश्वरः कुट्टिकविः स्वमातुलपुत्रेण लक्ष्मीपतिना स्वमातुलेन तिरुमलमखिना च समं सम्प्रतिपत्रं व्यतरत्, तदा कुम्भघोणे नानाजि पंडितः बाबाजि पंडितपुत्रः तञ्जापुरीशस्य शरभमहाराज स्याज्ञावशंवदो राजप्रतिनिध्यधिकारमध्यवहत् इ त कुम्भघोणमहाजनैः अहोबलसोमयाजिदत्तं श्रीस्वामिभिः प्रेषितं विभूतिगन्धप्रसादमाज्ञापत्रं च शिरसा धृत्वा श्रीमठाय समर्पिताया विज्ञापनपत्रिकायाः प्रतीयते । तथाहि—

विद्यामुद्राङ्कितो बोधं निजं भक्ते प्रसादयन् । देशिको दक्षिणामूर्तिश्चित्ते नित्यं प्रकाशताम् ॥ श्रीमदद्वैतसाम्राज्यसिंहासनमुपेयुषाम् । सर्ववैदिकसंरक्षादक्षसत्कीर्तिशालिनाम् ॥ उपन्यासनखन्यासैः वादिशुण्डालमण्डलम् । परिखण्डयितुं चण्डकेसरीन्द्रावलासिनाम् ॥ शांतेः शरणभूतानां विद्यायाः केलिसद्मनाम् । आत्मध्यानेन सततमानंदमधिजग्मुषाम् ॥ कांचीपुरमहाक्षेत्रस्वीयभू (धा ?) म्नां महीयसाम् । शङ्करचार्यपीठस्य ख्यातिं कर्तुं पटीयसाम् ॥ पुनानानां महादेवसरस्वत्याख्यया जगत् । महतां गुरुपादानां बहीः पादनमस्क्रियाः ॥ विदधानस्त्रिसंध्यं च विनयेनातिभूयसा । श्रीबाबाजिमहाविद्वत्प्रभुपुत्रोऽतिभक्तिमान् ॥ जीवाम्बानन्दनः प्राज्ञः श्रीमान् नानाजिपंडितः गुरुपूजाव्यवस्थायै समर्पयति शासनम् ॥

---

# ॥ शोधन पत्रिका ॥

| पृष्ठ | पंक्ति | असाधुः | साधुः |
|---|---|---|---|
| 1 | 8 | अयं | अवं |
| 3 | 10 | तस्य व्याप्तिः | तस्य व्याप्तं व्याप्तिः |
| 3 | 13 | परास्थानं | परावस्थानं |
| 5 | 16 | श्री | श्रीः |
| 7 | 19 | परस्थातिः | परावस्थितिः |
| 9 | 18 | क्रान्ता | कान्ता |
| 21 | 13 | व्यज्येन्ते | व्यज्येते |
| 26 | 13 | संरम्भ | संरम्भ |
| 27 | 2 | प्रसिन्नः | प्रस्विन्नः |
| 28 | 5 | जान्तो | जातो |
| 32 | 6 | नवरिष्यति | नवतरिष्यति |
| 33 | 11 | याघ्र | याम्रा |
| 32 | 14 | घस्मरः | घस्मरः |
| 51 | 17 | समिति......चन्द्रः | संय त्समि त्याजि समि युध इत्यमरः |
| 52 | 21 | निष्के ष्वचष्के | चक्के निष्के |
| 53 | 5 | विसृष्टा ह्रीः | विसृष्टालज्जा ह्रीः |
| 57 | 6 | घनः | घनाः |
| 59 | 15 | पञ्जोपत्यं | पञ्जोरपत्यं |
| 63 | 5 | अष्टम | अष्टमां |
| 64 | 4 | क्रूरै | क्रूरै |
| 64 | 10 | व्यवपाय | व्यवसाय इव |
| 64 | 13 | निरतिश | निर्तिशय |
| 64 | 14 | शात्रवाणनां | शात्रवाणां |
| 68 | 14 | श्लाघीय भावः | श्लाघी भावः |
| 72 | 19 | बलामुख | बलीमुख |
| 75 | 9 | भ्र | भृ |

| पृष्ठ | पंक्ति | असाधुः | साधुः |
|---|---|---|---|
| 75 | 11 | हारा | हारी |
| 80 | 12 | तथोक्तः | स तथोक्तः |
| ,, | ,, | कपटः | कपटः तस्य |
| 83 | 6 | ग्रामणिः | ग्रामणीः |
| 89 | 6 | लोका | लोक |
| 93 | 13 | वः | जलधिः वः |
| 96 | 9 | वातन्तरं | वानन्तरं |
| 98 | 10 | भीतेः | शापस्य शापात् भीतेः |
| 102 | 6 | धामा | धावा |
| 106 | 13 | तादृशा | तादृशो |
| 110 | 16 | श्रयते | श्रूयते |
| 113 | 14 | स्तथो | स्तथोक्तेः |
| 118 | 18 | द्भंशन | दृभ्रंशनं |
| 123 | 4 | आवलयितः | आवलयिताः |
| 124 | 17 | दूरीकरोतु | दूरीकुर्वन्तु |
| 124 | 18 | अपवाहयतु | अपवाहयन्तु |
| ,, | ,, | नाशयत्वि | नाशयन्त्वि |
| 127 | 5 | चेदंसौ | चेदं यत् |
| 117 | 11 | युषान् | युष्मान् |
| 128 | 9 | मृत्याः | मृत्योः |
| 129 | 15 | कर्तचिः | कर्तरिच्छिवः |
| 130 | 8 | दुर्योधाता | दुर्योधना |
| 131 | 3 | पराचर | पराशर |
| 139 | 6 | जत्म | जन्म |
| ,, | ,, | तस्म | तस्मा |
| 146 | 5 | भक्ष्यस्ना | भक्ष्यन्तां |
| 147 | 20 | दिशातु | स्त्रीत्वं |
| 147 | 22 | स्त्रीत्वं | दिशातु |

*

| पृष्ट | पंक्ति | असाधुः | साधुः |
|---|---|---|---|
| 149 | 12 | एवा | एका |
| 154 | 18 | अविराहणं | अवरोहणं |
| 157 | 6 | श्राम | श्रीम |
| 159 | 13 | कायं क यं | कामं |
| 159 | 15 | तद्स्यास्ति | तदस्या अस्ति |
| 160 | 17 | पयोप्तं | पर्याप्तं |
| 160 | 21 | घक्षरं | ह्यक्षरं |
| 164 | 8 | अब्रह्मानन्दाय | ब्रह्मानन्दाय |
| 164 | 16 | शरीरावया | शरीरावथवा |
| 165 | 12 | अधिकृत्य | अधिकृत्यकृतो |
| 166 | 10 | पङ्क्तिद्याः | पङ्क्तिः |
| ,, | ,, | विप्रकाशो | विद्याप्रकाशो |
| 170 | 17 | अथोध्या | अयोध्या |
| 171 | 18 | जलक्रीधा | जलक्रीडा |
| 174 | 14 | त्रिदशैमुक्ति | त्रिदशै मुंक्ति |
| 176 | 11 | कृतं | कृतां |
| 176 | 20 | श्रेष्ठे | श्रेष्ठ |
| 176 | 21 | शिवरं | शिखरं |
| 180 | 16 | धर्ममभा | धर्मंमा |
| 183 | 17 | सञ्चलद्ध | सञ्चलद्भि |
| 184 | 2 | पुणडरीकस्य | पुण्डरीकस्य |
| 186 | 22 | सध्द्रचीन | सध्द्रीचीन |
| 186 | 9 | कुञ्चत | कुञ्चित |
| 186 | 6 | तच्छूत्वा | तच्छुत्वा |
| ,, | 10 | नृपपं | नृप |
| ,, | 15 | सुराणमधिप | सुराणामधिप |
| 189 | 21 | मोक्षद | मोक्षदं |
| 192 | 6 | मध्याजुंन | मध्यार्जुन |
| 198 | 12 | शम्भो | शम्भोः |

———

॥ श्रीसीताराम ॥

# ॥ आशीर्वाद शतकम् ॥

मूलम्—कल्याणं वः करोतु प्रलयघनपयोव्याप्तलुप्तप्रपञ्च-

प्राग्विन्यासप्रकारक्रमसदृशपुनः कल्पनाऽनल्पशिल्पी ।

ज्येष्ठस्सर्वाऽमराणां मुखकमलवनीसंसरद्वेदहंसः

कंसारेर्नाभिजन्मा विधिरखिलजगद्भूरिसंसारभारः ॥ १ ॥

व्याख्या—

श्रीसिद्धिबुद्धीशमुमासुताऽग्र्य ब्रह्मेन्द्रमुख्यैरभिपूज्यमाद्यम् ।

भाग्यं नतानामधिपं गणानां तं ज्येष्ठराजं कविराजमीडे ॥

पादाऽऽनतं मूकमपीह लोके वाचस्पतिं या कुरुते कटाक्षैः ।

नृत्येत्सदा मे रसनाग्ररङ्गे सा भारती सूनृतवाक्प्रसिद्ध्यै ॥

को न्वस्मिन्भुवनेऽद्य सद्गुणनिधिर्वात्सल्यवारान्निधिः

शान्तिश्रीपरमावधिः कृतविधिर्दान्तिक्षमाशेवधिः ।

लोकान्तर्हृदयान्धकारपटलीन्यक्कारि तेजोनिधि-

स्सोऽयं सद्गुरुचन्द्रशेखरयतिस्तत्पादपद्मं श्रये ॥

कामाक्षीति विभाव्यते यदि गुरुर्वात्सल्यमुख्यैर्गुणै-

र्माता राम इतीरितः खलु पुरे वाऽन्तर्विचारे कृते ।

नारी वाऽथ नरोऽपि वा किमपि नाऽनिर्देश्यसद्वस्त्वयं
श्रीमद्देशिकचन्द्रशेखरयतिस्तत्पादपद्मे श्रये ॥

दैव्यां वाण्यां पुराणेष्वनितरसुलभा माप सच्छेमुषीं यो
धारां शुद्धामधत्त त्रिदशवरसरित्स्पर्धिनीं यः कवीन्द्रः ।
वाञ्छानाथस्य तस्य प्रथितसुकवितासागरं दुर्विलङ्घ्यं
श्रीकाञ्चीकामकोटीयतिवरकरुणानौकया सन्तरामि ॥

श्रीमत्कुप्पाऽन्वयाऽम्भोनिधितुहिनरुचिर्दक्षिणामूर्तिशास्त्री
ज्योतिर्विद्याप्रवीणः परिचितनिगमश्चाऽन्नपूर्णाद्वितीयः ।
तत्पुत्रः कुट्टिविद्वत्कविवरशतकेष्वाशिषां यन्निधानं
तद्व्याख्यातुं प्रवृत्तो गुरुपदभजनश्रीयुतोऽस्म्याञ्जनेयः ॥

सुधाऽऽसारो हि देवानां गुरूणां चाऽऽशिषां फलम् ।
तदाऽऽख्ययैव व्याख्येयं जीयादाचन्द्रतारकम् ॥

व्याख्यात्री सद्गुरोराज्ञा केवलं लेखकोऽस्म्यहम् ।
तस्या एव गुणास्सर्वे दोषास्सर्वे ममैव हि ॥

इह खलु गीर्वाणभाषासागरमन्थानमन्दरस्सकलपुराणेतिहास-गूढाऽर्थसर्वङ्कषशेमुषीधुरन्धरोऽनर्गलकवितागङ्गातुहिनभूधरः कृपाऽकूपारः कुट्टिकविरिति प्रख्यातबिरुदः श्रीवाञ्छानाथनामा कविशेखरः कलिग्रहग्रस्तसमस्तप्राणिलोकमुद्धर्तुकामो देवताऽऽद्यनुग्रहगर्भितमाशीर्वादजातमनुगृह्णाति ' कल्याण " मित्यादिना शताधिकस्रग्धरावृत्त-

रत्नसमुदयेन-"मानं जनादविदुषः करुणो वृणीत" इति श्रीमद्भागवत-वचनं मनसि कृत्वा तत्तद्देवताऽऽदीन्वृत्तरत्नस्रग्धरान्विधाय सकल-प्राणिलोकमनुग्राहयति—यद्यपि प्रायशश्शतकेषु पद्यानां कविभिः परस्परं सङ्गतिर्नाऽऽद्रियते; अथाऽपि कविशिरोमणिरयं तामपि मनस्यकरोत्, अतो यथाशक्ति सङ्गतिः प्रदर्शयिष्यते; अस्यां सुधाऽऽसाराऽऽख्य-व्याख्यायां प्रतिश्लोकमादौ सङ्ग्रहतात्पर्यावगाहनाय कर्तृकर्मक्रिया-ऽऽत्मकं वाक्यं प्रदर्श्यते; कल्याणमिति विधिः—ब्रह्मा वः—युष्माकं कल्याणं-शुभं करोतु प्रलये—प्रलयकाले ये घनाः मेघाः तेषां पयः—जलं तस्य व्याप्तिः (भावे क्तः) तेन लुप्तः—अदर्शनं प्राप्तः, यद्वा पयसा व्याप्तः (कर्मणि क्तः) अत एव लुप्तो यः प्रपञ्चः—लोकः तस्य प्राग्विन्यासः—पूर्वस्सन्निवेशः तस्य प्रकारः—विधा तस्य क्रमः—नैयत्येन पूर्वापरा स्थानं तेन सदृशी—तुल्या या पुनः कल्पना—पुनस्सृष्टिः (पुंवत्कर्मधारयजातीयदेशीयेष्विति पुंवद्भावः) कल्पना—(कृपेण्यशिश्रन्थ्योयुजिति युच्—कृपेरो ल इति लः) तस्यामनल्पः—अधिकः शिल्पी सर्वेषाममराणां—देवानां ज्येष्ठः—अग्रजः प्रथमः जीवः हिरण्यगर्भः (ब्रह्माऽऽत्मभूस्सुरज्येष्ठ इत्यमरः) (प्रशस्यशब्दादतिशायने तमबिष्ठनाविति इष्ठनि ज्यचेति प्रशस्यशब्दस्य ज्यादेशः) तस्य मुखान्येव कमलानि (रूपकं) तेषां वनी—अल्पा-टवी (गौराऽऽदित्वान्ङीष्) तस्यां संसरन्तः—विहरन्तः वेदा एव हंसाः—श्वेतगरुतः यस्य स तथोक्तः निर्मलत्वाद्वेदानां हंसत्वेन रूपणम्-यद्वा प्रसर्पन्-प्रसरन् वेद एव हंसः सूर्यः-यस्य स तथोक्तः (भानु-

हंसस्सहस्रांशुरित्यमरः) आदावविज्ञातसृष्टिप्रकारस्याविद्यामुद्रामुद्रितस्य ब्रह्मणः परमाऽऽत्मकृतवेदोपदेशानन्तरं ज्ञानोदयेन विकसितमुखत्वं जातमिति पुराणप्रसिद्धम्—अनेन वेदार्थविज्ञानेन सृष्टितत्त्वविज्ञानं भवतीति व्यज्यते, कंसारेः—श्रीमन्नारायणस्य नाभेर्जन्म—उत्पत्तिर्यस्य स तथोक्तः (गमकत्वात्समासः) अखिलानि यानि जगन्ति तान्येव भूरिः—महान् संसारभारः—कुटम्बपोषणाऽऽयासः यस्य स तथोक्तः विधिः—ब्रह्मा वः—युष्माकं कल्याणं—शुभं करोतु—'धाता यथापूर्वमकल्पय'दिति श्रुत्यर्थोऽत्र वर्णितः—म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्—लक्ष्मीकरः कवर्गः स्यादिति आदौ कवर्गप्रयोगो भूदेवताकमगणाऽऽदृतिर्भद्रवाचककल्याणशब्दप्रयोगश्चात्यन्तं शुभदाः। प्रायशोऽयं ग्रन्थो मङ्गलप्राय एव-अखिलजगदाशीर्वादतत्परस्यास्य महाकवेरादावखिलजगद्भूरिसंसारभारस्य ब्रह्मणः प्रसङ्गोऽत्यन्तं समुचितः। अस्मिन् ग्रन्थे सर्वत्राशीर्वादालङ्कारः, तदुक्तं काव्यादर्शे "आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा। पातु वः परमं ज्योतिरवाङ्मानसगोचरमिति। कौर्मपुराणे अध्या ४५—चतुर्युगसहस्रान्ते सम्प्राप्ते प्रतिसञ्चरे। आत्मसंस्थाः प्रजाः कर्तुं प्रतिपेदे प्रजापतिः। ततो भव त्यनावृष्टिस्तीव्रा सा शतवार्षिकी॥ पिबन्नपस्समिद्धोऽग्निः पृथिवीमाश्रितोऽज्वलत्। ततो जलधरा वर्षं मुञ्चन्तीह महौघवन्। पर्वताश्च विलीयन्ते मही चाप्सु निमज्जति॥ सृष्टिः—तपश्चचार प्रथमममराणां पितामहः। आविर्भूतास्ततो वेदास्साङ्गोपाङ्गपदक्रमाः। वेदाभ्यासरतस्यास्य

प्रजाकामस्य मानसाः । मनसः पूर्वसंसृष्टा जाता ये मानसाः स्मृताः ॥ सूतसंहितायाम्—शिवमाहात्म्ये अध्यायः ९—पूर्वसर्गोत्थविध्वस्ता-नखिलानमरप्रभुः । यथापूर्वं द्विजाः स्रष्टुं मतिं चक्रे प्रजापतिः ॥

हस्ताब्जन्यस्तवीणाप्रगुणगुणभवत्काकलीपाकलीला-
सोदर्यश्रीककण्ठोदितकलमधुरोदारसङ्गीतनादा ।
वेधोवक्त्राब्जसौधोपरिविहृतिपरा शारदा शारदाभ्र-
च्छायादायादकाया प्रभवतु रसनावर्तिनी नर्तिनी वः ॥ २ ॥

ब्रह्मणः पत्नीं प्रस्तौति—"हस्ताब्जेत्यादि" शारदा—सरस्वती वः—युष्माकं रसनावर्तिनी—जिह्वावर्तिनी सती नर्तिनी—नर्तनवती भवतु ।

हस्तौ अब्जे इव हस्ताब्जे—करकमले (उपमा) तयोः न्यस्ता चासौ वीणा तस्याः प्रगुणाः—श्रेष्ठाः अवक्रा वा गुणा तन्त्र्यः तेभ्यो भवन्ती—उत्पद्यमाना चासौ काकली—सूक्ष्ममधुरध्वनिः (काकली तु कले सूक्ष्म इत्यमरः) तस्याः पाकलीला—परिपाकातिशयः तस्यास्सोदर्या तत्तुल्येत्यर्थः श्री —शोभा यस्य सः (शैषिकः कप्) (उपमा) स चासौ कण्ठादुदितः—उत्पन्नः कलमधुरः—अत्यन्तश्राव्य इत्यर्थः उदारः उदात्तश्च सङ्गीतनादः—गानध्वनिर्यस्यास्सा तथोक्ता वीणानादसदृशमृदुमधुरगाना वेधसः—ब्रह्मणः (स्रष्टा प्रजापतिर्वेधा इत्यमरः) वक्त्राणि—मुखानि अब्जानि—

पद्मानीव (उपमा) (अद्भ्यो जातानि) पञ्चम्यामजाताविति जनेर्डः।
अब्जोऽस्त्री शङ्खे ना निचुले धन्वन्तरौ च हिमकिरणे क्लीबं पद्म
इति मेदिनी। तान्येव सौधानि-हर्म्याणि राजसदनानि (रूपकम्)
तेषु विहृतिः—विहारः, तत्र परा—आसक्ता शरदि भवं शारदं
(ऋत्वण्) तच्च तत् अभ्रं—मेघः (अभ्रं मेघ इत्यमरः) तस्य छाया
—कान्तिः तस्याः दायादः—ज्ञातिः तत्सदृश इत्यर्थः, कायः—
देहो यस्यास्सा तथोक्ता. श्वेतवर्णा शारदा—सरस्वती वः—युष्माकं
रसनायां—जिह्वायां वर्तितुं शीलमस्या इति तथोक्ता सती नर्तिनी
नर्तनवती (नृती गात्रविक्षेपे इत्यस्माद्भावेघञन्तान्मतुबर्थे इनिठनाविति
इनि प्रत्यये ऋन्नेभ्य इति ङीप्) नर्तनीति वा पाठः भवतु।
ब्रह्मवैवर्ते ब्रह्मखण्डे—अध्यायः ३—

आविर्बभूव तत्पश्चान्मुखतः परमात्मनः।
एका देवी शुक्लवर्णा वीणापुस्तकधारिणी।
श्रेष्ठा श्रुतीनां शास्त्राणां विदुषां जननी परा।
गोविन्दपुरतः स्थित्वा जगौ प्रथमतस्सुखम्।
तन्नामगुणकीर्तिं च वीणया सा ननर्त च॥
तत्रैव गणेशखण्डे अध्यायः ४०—

श्रीकृष्ण उवाच— कलहस्य फलं भुङ्क्ष्व सपत्नीभ्यां—
(लक्ष्मी-भूमिभ्यां) सहाऽच्युते।
स्वयं च ब्रह्मसदनं ब्रह्मणः कामिनी भव॥

दद्यादद्यामितं वो विभवमिभवरोद्धारबद्धारभट्या
धाट्या द्रागन्वटाट्या सरुडुरगरुडाटोपवैयर्थ्यकारी ।
चक्रेण क्रूरकर्मक्रमकरमकरध्वंसनः कंसवैरी
तत्तादृग्भक्तियुक्ताखिलजनविपदुत्तारदत्ताऽऽस्थचित्तः ॥ ३ ॥

सृष्टिकर्तुरनन्तरं पालकं गजेन्द्रोद्धारकं प्रस्तौति दद्यादिति ॥ कंसवैरी—श्रीमन्नारायणः वः—युष्मभ्यम् अमितम्—अनन्तम् विभवम्—ऐश्वर्यं दद्यात्—यच्छेत् इभवरस्य—गजेन्द्रस्य उद्धारे-आपद्भ्यः उत्तारणे बद्धा—गाढं कृता चासावारभटी प्रौढिमा यस्यां तया धाट्या दण्डयात्रया तस्यां वा या द्रागन्वटाट्या—शीघ्रगमन-मित्यर्थः । तया (परिचर्यापरिसर्यामृगयाऽटाट्यानामुपसंङ्ख्यानमिति वार्तिकेन निपातितः अटगतौ) व्रज्याऽटाट्या पर्यटनमित्यमरः) सरुषः आग्रहयुक्तस्य उरगरुषः—पन्नगद्वेषिणो गरुडस्य य आटोपः—सम्भ्रमः तस्य वैयर्थ्यकारी—नैष्फल्यकारी (सुप्यजाताविति ताच्छील्ये णिनिः) वेगवत्सु अहमग्रेसर इति गरुडस्य य आग्रहस्तं गजेन्द्ररिरक्षयिषया क्रियमाणदण्डयात्रावेगेनापाहरदिति भावः । गरुत्मद्वेगातिशायिवे-गवानिति यावत् । अनेन भक्तरक्षणे सम्भ्रमातिशयस्सूच्यते । चक्रेण —चक्राऽऽयुधेन क्रूरं दारुणं च तत्कर्म—कृत्यं गजग्रहणं तस्य क्रमः—नैयत्येन पूर्वापरस्थतिः तां करोतीति तथोक्तः (कृञो हेतुताच्छील्यानु-लोम्येष्विति टः) स चासौ मकरः—ग्राहः तस्य ध्वसनः—संहारकः (बाहुलकात्कर्तरि ल्युट्) तत्तादृशी निरतिशया चासौ भक्तिः तया—

एकान्तभक्त्या युताः—सहिताः ये जनाः—प्राणिनः तेषां या आपदः ताभ्यः उत्तारः—उद्धरणं तस्मिन् दत्ता—कृता आस्था—अत्यन्ताऽऽसक्तिः चित्ते—मनसि यस्य सः (गमकत्वात्समासः) यद्वा कृता आसक्तिः येन तत् कृताऽऽसक्ति चित्त यस्य स तथोक्तः कंसवैरी—श्रीमन्नारायणः वः—युष्मभ्यम् अमितम्—अत्यन्तं विभवम् —ऐश्वय दद्यात्—यच्छेत् स्वाधिष्ठितगरुडवेगेनासन्तुष्टो भक्तानुकम्पी कंसवैरी ततोऽधिकवेगं चक्राऽऽयुधं प्राहिणोदिति भावः। श्रीमद्भागवते स्कन्धः २ अध्यायः ७.

श्लो ॥ अन्तस्सरस्युरुबलेन पदे गृहीतो ग्राहेण यूथपतिरम्बुजहस्त आर्तः। आहेदमादिपुरुषाऽखिललोकनाथ तीर्थश्रवः श्रवण मङ्गलनामधेय। श्रुत्वा हरिस्तु शरणार्थिनमप्रमेयश्चक्राऽऽयुधः पतगराजभुजाधिरूढः। चक्रेण नक्रवदनं विनिपाट्य तस्माद्धस्ते प्रगृह्य भगवान्कृपयोज्जहार ॥

तत्तत्प्राग्भागधेयोदयसदृशनिजापाङ्गवीक्षाविशेष-
व्यापारव्यक्ततत्तज्जनविपुलघनैश्वर्यनैकप्रभेदा।
माता पैतामही सा सकलमुनिजनोत्फुल्लहृत्पद्मसद्मा
पद्मा पद्माक्षकान्ता निवसतु भवतामिन्दिरा मन्दिराऽन्तः ॥४॥

पालकपत्नीं प्रस्तौति—"तत्तदिति"—इन्दिरा—लक्ष्मीः भवतां—युष्माकं मन्दिराणां—गृहाणामन्तः—मध्ये निवसतु—निवासं करोतु—

तेषां तेषां–भिन्नभिन्नानां प्राग्भागधेयानां–पूर्वजन्मार्जितभाग्यानां (भागरूपनामभ्यो धेयो वाच्य इति धेयः) उदयेन—उन्नत्या (उदयः पर्वतोन्नत्योरिति हैमः) सदृशी–तुल्या चाऽसौ निजापङ्गवीक्षा स्वकीयकटाक्षः तस्याः विशेषव्यापारैः—विभिन्नप्रसारैः व्यक्ताः प्रस्फुटाः तत्तज्जनानां—भिन्नभिन्नजनानां विपुलं–विस्तृतं धनं—महच्च तदैश्वर्यं–सम्पत्तिः तस्य नैके–बहवः, (नञर्थेन नशब्देन सुप्सुपेति समासः) गवान्तगजान्तलक्षाधिकारित्वकोटीशत्वादयः प्रभेदाः–प्रकृष्टा अवान्तरविभागाः यस्यास्सा तथोक्ता पितामहस्य इयं पैतामही–ब्रह्मसम्बन्धिनी (पितृव्यमातुलमातामहपितामहा इति निपातितः पितामहशब्दः) तस्मात्तस्येदमित्यण् ततो ङीप्) माता—जननी "पत्न्यः पितुर्मातर एव सर्वाः" इति न्यायेन जननी सकलानां—सर्वेषां योगकलया युक्तानां वा मुनिजनानां—योगिसमूहानाम् उत्फुल्लानि—विकसितानि हृन्दि—हृदयानि तान्येव पद्मानि—सरसिजानि तान्येव सद्म–निवासस्थानं यस्यास्सा तथोक्ता (सावयवरूपकम्) पद्मं—पङ्कजं निवासत्वेनास्या अस्तीति पद्मा—पद्मनिवासिनी पद्मे इव अक्षिणी—नेत्रे यस्य तस्य (सक्थ्यक्ष्णोः स्वाङ्गात्षजिति षच् टिलोपः) कान्ता—प्रियपत्नी सा—प्रसिद्धा इन्दिरा—लक्ष्मीः भवतां — युष्माकं मन्दिराणामन्तः — मध्ये निवसतु — निवासं करोतु । श्रीमद्भागवते स्कं ८ अध्यायः ८—

ततश्चाऽऽविरभूत्साक्षाच्छ्रीरमा भगवत्परा ।

विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाऽव्यभिचारिसद्‌गुणम्। नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं क्वचित्तच्च न सङ्गवर्जितम् । एवं विमृश्याव्यभिचारिभिर्गुणैर्वरं निजैकाऽऽश्रयताऽऽगुणाऽऽश्रयम् । वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीश्वरम् ॥

अङ्के विन्यस्तपङ्केरुहनयनपदाम्भोजसंवाहलीला-
किञ्चित्किञ्चित्कराब्जद्वयचलितकणत्कङ्कणक्वाणरम्या ।
भूतानामादिभूता नदनगनगरग्रामसीमाऽभिरामा
सर्वं सर्वंसहा वः प्रथयतु विभवं कोमलश्यामलाङ्गी ॥ ५ ॥

श्रीमहाविष्णोर्द्वितीयां पत्नीं प्रस्तौति — अङ्क इति । सर्वंसहा — भूदेवता सर्वं — समस्तं धनकनकवस्तुवाहनाऽऽदिकमैश्वर्यं वः—युष्माकं प्रथयतु—विस्तारयतु ।

अङ्के—उत्सङ्गे विन्यस्ते—निक्षिप्ते पङ्केरुहे—पद्मे इव (रुहेरिगुपधज्ञाप्रीकिरः कः इति कः । तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक ) नयने—नेत्रे यस्य तस्य ये पदे —पादावेव अम्भोजे कमले (आरोपोद्‌देशस्य प्रकृतोपयोगित्वे परिणाम इति अप्पय्यदीक्षिताऽऽदिमते परिणामः, आरोपविषयस्य प्रकृतोपयोगित्वे परिणाम इति विद्यानाथाऽऽदिमते उपमा) तयोः संवाहः—कोमलमर्दनपरिचर्या सैव लीला—श्रृङ्गारचेष्टाविशेषः तस्यां किञ्चित्किञ्चित् —अत्यल्पं च यत् करौ—हस्तौ अब्जे—पद्मे इव तयोर्द्वयं तस्य चलितं—चलनं (भावे

क्तः) तेन कणन्तः—ध्वनन्तश्च ते कङ्कणाः—हस्ताऽऽभरणानि तेषां क्वाणः—ध्वनिः [भूषणानान्तु शिञ्जितम् । निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपीत्यमरः] तेन रम्या—मनोहरा भूतानां—पञ्चभूतानां पृथिव्यादीनाम् आदिभूता—प्रथमा नद्यश्च नदाश्च नदाः [पुमान् स्त्रियेत्येकशेषः] नगाः—पर्वताः नगराणि —पत्तनानि (नगपांसु-पाण्डुभ्यो रो वाच्य इति रः) ग्रामाः तेषां सीमाः—परिधयश्च तै-रभिरामा—रम्या कोमलं—मृदुलं श्यामलं—सस्यादिभिर्नीलम् अङ्गं —देहः यस्यास्सा तथोक्ता (अङ्गगात्रकण्ठेभ्यो वक्तव्यमिति ङीष्) सर्वं सहते—प्राणिकृतसर्वापराधान् सहत इति सर्वं सहा --भूदेवता (पूस्सर्वयोर्दारिसहोरिति खच् अरुर्द्विषदजन्तस्येति मुम्) वः- युष्माकं सर्वं— पुत्रमित्रकलत्राऽऽदिकं सकलं विभवम्—ऐश्वर्यं प्रथयतु—विस्तारयतु वृद्धिं गमयतु ; लोके माता पुत्रापराधान् सर्वान्सहमाना सेवया पतिमनुनीय पुत्रान्स्वभर्त्रा वृद्धिं गमयति, तथा भूदेवतेयमपि लोकत्रातारं लोकतातं स्वपतिं सेवया अनुनीय तेन श्रीमहाविष्णुना स्वपुत्रान्सर्वप्राणिनः रक्षयतीति भावः ॥

अच्छस्वीयाग्रपुत्रप्रतिहतसलिलोद्गच्छदुद्वेलखेल-
त्कल्लोलाऽऽक्रान्तघोरप्रलयजलनिधिप्राप्तसञ्चारलीलः ।
हत्वा दैत्याऽधिपं द्रागपहृतनिगमं प्रोद्धृताशेषवेदो
मीनाधीशस्स मीनात्वगणितमहिमा हन्त दीनां दशां वः ॥६॥

प्रसक्तान् श्रीमहाविष्णोरवतारान्प्रस्तौति - "अच्छेत्यादि" मीनाधीशः — धृतमत्स्यावतारः श्रीमहाविष्णुः वः - युष्माकं दीनां दशां - दारिद्र्ययुक्तामवस्थां मीनातु - नाशयतु—

अच्छः - परिशुद्धः स्वीयश्चासौ अग्रपुत्रः - ज्येष्ठपुत्रः - ब्रह्मा ("स्वीय" इत्यत्र तस्मै हितमिति छः। अन्यथा तस्याय-मित्यर्थे गहादित्वाच्छे स्वस्य चेति कुक्स्यात्) तेन प्रतिहतं च तत्स-लिलं - जलं तस्मादुद्गच्छन्तः - ऊर्ध्वं प्रसरन्तः उद्वेलं - वेलामतिक्रम्य खेलन्तः - नटन्तश्च ते कल्लोलाः - तरङ्गाः तैः आक्रान्तः - व्याप्तः घोरः - दारुणश्चाऽसौ प्रलयजलनिधिः - प्रलयकालिकसागरः तत्र प्राप्ता - अधिगता सञ्चारः - विहार एव लीला - विलासः यस्य स तथोक्तः। अनेन निर्भीकत्वं दैत्येन्द्रसंहननपराक्रमातिशयश्च व्यज्येते, अपहृताः- वञ्चनया आयत्तीकृताः निगमाः - वेदाः (निगमो वणिजे पुर्यां कटे वेदे वणिक्पथ इति विश्वः) येन तं दैत्याधिपं - राक्षसराजं सोमकं द्राक् - आशु हत्वा प्रोद्धृताः - पूर्वस्थितिं प्रापिताः अशेषाः - सम-स्ताश्च ते वेदाः - श्रुतयः येन स तथोक्तः अगणितः - अनन्तः, महिमा - महत्त्वं यस्य स तथोक्तः - मीनाधीशः - धृतमत्स्यावतारः श्रीमहाविष्णुः वः - युष्माकं दीनां - दारिद्र्ययुक्तां (निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपिचेत्यमरः) दशाम् - अवस्थां मीनातु - नाशयतु (मीञ् हिंसायां क्र्यादिः आशिषिलोट्) हन्तेति खेदे। अनेनास्य महाकवेः दीनदशामग्नजगत्यनुकम्पा व्यज्यते। श्रीमद्भागवते स्कं

२ अध्याय: ७ श्लो ५ - मत्स्यो युगान्तसमये मनुनोपलब्ध: क्षोणीमयो निखिलजीवनिकायकेत: । विस्रंसितानुरुभये सलिले मुखान्मे आदाय तत्र विजहार ह वेदमार्गान् ।

योक्त्रव्याकृष्टपृष्ठभ्रमणविघटितस्कन्धमन्थानशैल-
ग्रावाग्रोत्सृष्टकण्डूशमनभवसुखप्राप्तनिस्तन्द्रनिद्र: ।
उद्यन्निःश्वासवातोच्चलितघनपयोबुद्बुदोद्धूतसिन्धु:
स श्रीमानादिकूर्मो निरुपममिह न: शर्म निर्मातुमीष्टाम् ॥७॥

क्रमप्राप्तं कूर्मावतारं प्रस्तौति - "योक्त्रेत्यादि ॥ आदिकूर्म: - धृतकूर्मरूप: श्रीमहाविष्णु: व: - युष्माकं शर्म - सुख निर्मातुं - कर्तुम् ईष्टाम् - समर्थो भवतु ।

योक्त्रं - मन्थानरज्जु: (युजिर्योग इत्यस्माद् दाम्नीशसयुजे-त्यादिना ष्ट्रन् ) तेन व्याकृष्टं - विशेषेण कृष्टं यत्पृष्ठम् - अधोभाग: तस्य भ्रमणानि - सञ्चलनानि तैर्विघटिता: - त्याजिता: - विश्लेषिता: स्कन्धा: - शिलानां परस्परसन्धय इत्यर्थ: यस्य तस्य मन्थानशैलस्य - मन्दरगिरे: ग्रावाण: - शिला: (ग्रावा तु प्रस्तरे पृथ्वीधरे पुंसीति-मेदिनी) तेषामग्राणि - अन्तिमभागा: तैरुत्सृष्टम् - अतिशयेन कृतं यत् कण्ड्वा: - कण्डूते: शमनं - शान्ति: तेन भवम् - उत्पन्नं यत्सुखम् - आनन्द: - तेन प्राप्ता निस्तन्द्रा - गाढा निद्रा यस्य स तथोक्त:, अनेन हास्याद्भुतरसौ पोषितौ, पर्वतघर्षणस्याकिञ्चित्करत्वाल्लोका-

तिशायिपटिष्ठता व्यज्यते उद्यन्तः - ऊर्ध्वं गच्छन्तश्च ते निःश्वासवाताः तैरुच्चलिताः - ऊर्ध्वं गताः घनाः - महान्तः पयो बुद्बुदाः तैरुद्धूताः- बुद्बुदरूपेण उत्क्षिप्ताः सिन्धवः सागराः येन स तथोक्तः सः-प्रसिद्धः श्रीमान् - शोभायुक्तः लक्ष्मी - सहितो वा आदिकूर्मः - धृतकूर्मरूपः श्रीमहाविष्णुः वः - युष्माकं (लोकानुग्रहतत्परस्याऽस्य महाकवेः सर्वत्र "वः" इति पाठ एव सम्मतो नतु "नः" इति भाति) निरुपमम् - असदृशं (निरादयः क्रान्ताद्यर्थे द्वितीययेति समासः) शर्म - सुखं (शर्मशातसुखानि चेत्यमरः) निर्मातुं - कर्तुम् ईष्टां - समर्थो भवतु निरतिशयसुखं ददात्विति भावः—

श्रीमद्भागवते स्कं २ अध्यायः ७ क्षीरोदधावमरदानवयूथपाना मुन्मथ्नताममृतलब्धय आदिदेवः । पृष्ठेन कच्छपवपुर्विदधार गोत्रं निद्राक्षणोऽद्रिपरिवर्तकषाणकण्डूः ॥

यत्कायस्तब्धरोमाश्चलगतमखिलं वारिधीनां कदम्बं
प्रातर्घासाग्रलग्नप्रतनुहिमजलस्तोमशङ्कां चकार ।
शुभ्रादभ्राभ्रपृष्ठस्फुरितशशिकलाविभ्रमस्पष्टदंष्ट्रा-
मुस्ताखण्डायमानक्षितिरवतु स वः श्रीवराहः पुराणः ॥ ८ ॥

वराहावतारं प्रस्तौति "यदित्यादिना" पुराणः - पुरातनः श्रीवराहः - धृतवराहरूपः श्रीमहाविष्णुः वः - युष्मान् अवतु - रक्षतात् ।

यस्य - आदिवराहस्य यः कायः - देहः तस्य स्तब्धं - पुलकितं यद्रोम - केशः तस्य अञ्चलः - अग्रं तं गतं - प्राप्तं तथोक्तं (द्वितीयाश्रितेत्यादिना समासः) अखिलं - समस्तं वारिधीनां कदम्बं - समूहः सप्तापि समुद्राः प्रातः - प्रातःकाले यो घासः - बालतृणं (शष्पं बालतृणं घास इत्यमरः) तस्य अग्रं - अन्तिमो भागः तत्र लग्नं - सक्तं प्रतनु - अत्यल्पं च तत् हिमजलस्तोकं - स्वल्पतुषारबिन्दुः तस्य शङ्कां - संशयं चकार - अकरोत् (सन्देहालङ्कारः) अनेन देहातिमहत्त्वं तेनाऽलौकिकत्वं च प्रकटितम्। शुभ्रं - स्वच्छम् अदभ्रं - बहुलं (अदभ्रं बहुलं बहु इत्यमरः) च यदभ्रं - मेघः श्वेतमेघः तस्य पृष्ठम् - अधोभागः तत्र स्फुरिता - दीप्ता चासौ शशिकला - चन्द्रकला तस्याः विभ्रमः - विलास इव विलासः यस्यास्सा (पदगतनिदर्शनालङ्कारः) स्पष्टा चासौ दंष्ट्रा तस्यां मुस्ताखण्डः - ओषधिविशेषशकलमिव (कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियामित्यमरः) स इवाऽऽचरतीति मुस्ताखण्डायमाना मुस्ताखण्डसदृशी (उपमा) (कर्तुः क्यङ् सलोपश्चेति क्यङ् ततो लटश्शानच्ः मुगाऽऽगमश्च) तादृशी चासौ क्षितिः - भूमिः यस्य स तथोक्तः - अनेन विशेषणद्वयेन अस्य वराहस्य अतिमहत्त्वमलौकिकत्वं च प्रतीयेते। सः पुराणः - प्राचीनः (सायं चिरमित्यादिना ट्युट्युलौ पुराणप्राक्तेष्विति निर्देशात्तुण भवति) श्रीवराहः - आदिवराहरूपः श्रीमहाविष्णुः वः - युष्मान् - पातु - रक्षतात्।

श्रीमद्भागवते स्कं ३७ अध्यायः ८—जितं जितं तेऽजित यज्ञभावन त्रयीतनुं स्वां परिधुन्वते नमः। यद्रोमगर्तेषु विलिल्युरध्वरास्तस्मै नमः कारणसूकराय।

देवीभागवते स्कं ७ अध्यायः २— विदारयन् जलचरान् जगामान्तर्जले विभुः। भूमिं स देवदेवेशो दंष्ट्रयोदाजहार ताम् ॥ तां समुद्धृत्य दंष्ट्राग्रे यज्ञेशो यज्ञपूरुषः। शुशुभे दिग्गजो यद्वदुद्धृत्याथ सुपद्मिनीम् ॥

वज्रक्रूराग्रशङ्काकरकरजशिखाभिन्नहैरण्यवक्षः-
पीठत्रस्त्यायमानध्वनिभरभरितध्वस्तविध्यण्डभाण्डः।
प्रह्लादाऽऽह्लादहेतोस्सह विबुधमुदाऽऽविर्भवन्स्तम्भगर्भा-
दंहस्संहारकारी स भवतु भवतां रंहसा श्रीनृसिंहः ॥ ९ ॥

वज्रक्रूरेत्यादि ॥ श्रीनृसिंहः - लक्ष्मीनरसिंहः भवतां - युष्माकम् रंहसा - वेगेन अंहस्संहारकारी - पापध्वंसनशीलः भवतु।

वज्रस्य - वज्राऽऽयुधस्य - क्रूराणि - कठिनानि च तानि अग्राणि - उपरिभागाः (अग्रं पुरस्तादुपरि परिमाणे पलस्य च। आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम्। अधिके च प्रधाने च प्रथमे चाभिधेयवदिति मेदिनी) तेषां शङ्कां - संशयं कर्तुं शीलमासामिति वज्रक्रूराग्रशङ्काकर्यः ताश्च ताः करजानां - नखानां शिखाः - अग्राणि (पुंवत्कर्मधारयजातीयदेशीयेष्विति पुंवद्भावः)

ताभिः भिन्नं - विदीर्णं हिरण्यस्य - हिरण्यकशिपोरिदं हैरण्यं (नामैंकदेशे नामग्रहणं तस्येदमित्यण्) यद्वक्षः - उर एव पीठम् - तस्य प्रस्त्यायमानः - घनीभवन् (स्त्यैष्टयै शब्दसङ्घातयोरित्यस्माल्लटश्शानच्) यः ध्वनिभरः - महान्नादः तेन भरितः - पूर्णः अत एव ध्वस्तः - विदीर्णश्चासौ विश्वण्डभाण्डः - ब्रह्माण्डभाण्डः यस्य स तथोक्तः (अतिशयोक्तिः) प्रह्लादस्य - हिरण्यकशिपुतनयस्य आह्लादः - आनन्दः स एव हेतुः - कारणं तस्मात् प्रह्लादस्य सन्तोषजननायेति भावः। स्तम्भगर्भात् - सभामण्टपस्तम्भमध्यात् विबुधानां - देवानां मुदा - त्रिलोककण्टको नङ्क्ष्यतीति सन्तोषेण सह आविर्भवन् - प्रादुर्भवन् सः - सर्वव्यापकः श्रीनृसिंहः - लक्ष्मीनरसिंहः भवतां - युष्माकम् रंहसा वेगेन अंहसां - पापानां संहारः - ध्वंसः तं कर्तुं शीलमस्येति तथोक्तः - (सुप्यजातौविति णिनिः) भवतु दुष्कृतिनोपि हिरण्यकशिपोश्शिक्षया पापजालं परिहृत्य सद्गतिप्रदानेनोपकृतिमेवाकरोदिति

भावः। श्रीमद्भागवते स्कं ७ अध्यायः ८—

"एवं दुरुक्तैर्मुहुरर्दयन्रुषा सुतं महाभागवतं महासुरः।
खड्गंप्रगृह्योत्पतितो वरासनात् स्तम्भं तताडोरुबलस्स्वमुष्टिना॥

सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चाऽऽत्मनः।
अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभायां न मृगं न मानुषम्॥

चरन्त मच्छिद्र मुपर्यधोहरिः कृत्वाऽट्टहासं ख मुत्स्वनोल्बणं।
निमीलिताक्षं जगृहे महाजवः। द्वा र्यूरु मापात्यददार लीलया

नखैर्यथाहिं गरुडो महाविषम्। सटावधूता जलदाः परापतन्-ग्रहाश्च तद्दृष्टिविमुष्टरोचिषः। अम्भोधयः श्वासहता विचुक्षुभुः। निर्ह्रादभीता दिगिभा जहुर्मदम्—"

याच्ञादैन्योक्तिलज्जावशत इव तनौ ह्रस्वतामश्नुवानो
नम्रीभूतश्च शत्रो र्जगति बलितया वैतसीं वृत्तिमेत्य।
एकोऽपि द्वादशात्मा निजतनुमहसा पातु वर्णी भवन्वो
हर्तुं त्रैलोक्यलक्ष्मीं स्वयमसुरपतेश्छद्मना पद्मनाभः ॥ १० ॥

याच्ञेत्यादि—पद्मनाभः श्रीमहाविष्णुः वः युष्मान् पातु रक्षतात्। याच्ञायां भिक्षायाम्। यजयाचेति नङ्श्चुत्वम्। यद्दैन्यं दीनत्वं तेन सहिता या उक्तिः सम्भाषणम्। शाकपार्थिवत्वान्मध्यमपदलोपी समासः। दैन्यस्योक्तिरिति षष्ठीतत्पुरुषो वा। तत्र या लज्जा ह्रीः तस्या वशतः आयत्तत्वादिव। हेतूत्प्रेक्षा। "तृणाल्लघुतरस्तूलस्तूलादपि च याचक" इति याचकस्य दीनता प्रसिद्धा। तनौ देहे ह्रस्वतां खर्वताम्। "खर्वो ह्रस्वश्च वामन" इत्यमरः। अश्नुवानः भजमानः। शत्रोः बलितया बलिष्ठत्वेन। बलिनामकतयेत्यर्थान्तरम्। जगति लोके। प्रसिद्धामित्यध्याह्रियते। वैतसीं निचुलसम्बन्धिनीम्। "तस्येद"मित्यण् ङीप। वृत्तिं वर्तनसदृशं वर्तनम्। पदगतनिदर्शना। एत्य प्राप्य। नम्रीभूतः प्रह्वीभूतश्च। प्रायशो वेतसो नदीतीर एव प्ररोहति। स स्वोपरि नदी यदि बलवत्तरं प्रवहति तदा प्रवाहाभिमुखं न तिष्ठति, किन्तु प्रवाहमनु प्रह्वीभवति।

अतो नैवोन्मूलितो भवति। एवमेव शत्रोर्बलवत्तरत्वे विजिगीषुणा नम्रीभूय सन्धिः कार्यः। अतो नैव मूलोच्छेदो भविष्यतीति राजनीतिरनेन सूच्यते। एकः स्वयमेक एव सन्नपि। निजा स्वकीया चासौ तनुः देहः। तस्या महसा कान्त्या द्वादशात्मा द्वादशदेहवानिव। सूर्य इवेत्यर्थान्तरम्। विरोधाभासः। सूर्य इव भासमान इति भावः। "द्वादशात्मा दिवाकरः" इत्यमरः। असुरपतेः राक्षसराजस्य त्रैलोक्यलक्ष्मीं त्रिभुवनराज्यलक्ष्मीम्। छद्मना कपटेन स्वयं हर्तुं ग्रहीतुम्। वर्णी भवन् स्वयं रमाजानिरपि कपटब्रह्मचारी सन्। अभूततद्भावे च्विः। पद्मं नाभौ यस्य सः तथोक्तः श्रीमहाविष्णुः। "अच्प्रत्ययन्वव पूर्वात्सामलोम्न" इत्यत्र अजिति योगविभागादन्यत्राप्यच् पद्मनाभ इति भट्टोजिदीक्षितः। "गड्वादेः परा सप्तमी"ति वार्तिकात् सप्तम्याः परनिपातः। वः युष्मान् पातु। यस्त्रैलोक्यहितैककामनया स्त्रायासं स्वनैच्यं च नैव गणयति। स श्रीमहाविष्णु र्वो योगक्षेमावनुगृह्णात्विति भावः॥

श्रीमद्भागवते स्क ८-अध्यायः १८—

> श्रुत्वाश्वमेधैर्यजमानमूर्जितं बलिं भृगूणामुपकल्पितैस्ततः।
> जगाम तत्राखिल सारसंभृतो भारेण गां संनमयन् पदे पदे॥
>
> तदर्त्विजो यजमानस्सदस्या हतत्विषो वामनतेजसा नृप।
> सूर्यः किलाया त्युत वा विभावसुस्सनत्कुमारोऽथ दिदृक्षया क्रतोः॥

इत्थं स शिष्येषु भृगुष्वनेकधा वितर्क्यमाणो भगवान् स वामनः। छत्रं सदण्डं सजलं कमण्डलुं विवेश बिभ्रद्धयमेधवाटम् ॥

स्क-२ - अध्या—७. ज्यायान् गुणैरवरजोप्यदितेः सुतानां लोकान् विचक्रम इमान्यदथाधियज्ञः। क्ष्मां वामनेन जगृहे त्रिपदच्छलेन याञ्चामृते पथि चरन् प्रभुभिर्नचाल्यः ॥

निर्हेतुप्राप्तताद्दङ्निजपितृनिधनाऽमर्षदुर्वारवेग-
प्रारब्धक्षत्रगोत्रक्षतरुधिरसर स्स्नानतीर्णप्रतिज्ञः।
वीर्योद्यत्कार्तवीर्यार्जुनभुजविपिनाकुण्ठकौठारधारो
रामः पायाद्भृगूणां पतिरिह वितरन्काश्यपीं कश्यपाय ॥११॥

भृगूणां भृगुमहर्षिगोत्रापत्यानां पतिः पालकः श्रेष्ठो वा। रामः परशुरामः। युष्मानिति शेषः। पायात् रक्षतात्। हेतोः निष्क्रान्तं निर्हेतु, निष्कारणं यथा तथा वा प्राप्तं समागतं, ताद्दक् घोरं यन्निजस्य आत्मनः पितुर्जनकस्य जमदग्नेः। निजः आत्मीयश्चासौ पिता तस्य वा यन्निधनं मरणम्। "मृत्युर्मरणं निधनोऽस्त्रियाम्" इत्यमरः। तेन योऽमर्षः कोपः। "कोपक्रोधामर्षरोष प्रतिघा रुट् क्रुधोऽस्त्रियाम्" ॥ इत्यमरः। तेन दुर्वारः वारयितुमशक्य इत्यर्थः। सचासौ वेगः तीव्रता। तेन प्रारब्धं यत् क्षत्राणां क्षत्रियाणां गोत्रस्य वंशस्य क्षतं नाशः। भावे क्तः। तेन जातं यद्रुधिरं रक्तं तस्य सरः तटाकः क्षत्रियरक्ततटाकः। तस्मिन् यत् स्नानं तेन तीर्णा समापिता प्रतिज्ञा येन स तथोक्तः। वीर्येण पराक्रमेण उद्यन् गर्वित-

श्चासौ कार्तवीर्यार्जुनः कृतवीर्यतनयः तस्य भुजाः करा एव विपिनम् अटवी। कराणां सहस्रसंख्याकत्वात् विपिनत्वेन रूपणम्। तस्मिन्नकुण्ठा अप्रतिहता। कुठारस्य परशोरियं कौठारी धारा निशितोऽज्ज्वलः यस्य स तथोक्तः। "स्त्रियाः पुंवदित्यादिना पुंवद्भावः। भुजविपिनेत्यत्र मतभेदेन रूपकपरिणामौ। काश्यपीं भूमिं स्वेन जिताम्। "काश्यपी क्ष्माया"मिति मेदिनी। कश्यपाय कश्यपमहर्षये। वितरन् ददत्। भृगूणां भृगुमहर्षिगोत्रापत्यानाम्। "अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्चेति" बहुत्वे गोत्रापत्यप्रत्यस्य लुक्। पतिः पालकः। श्रेष्ठो वा। रामः परशुरामः। युष्मानिति शेषः। पायात् रक्षतात्। अकारणपितृवधजनितत्वेन अस्य क्रोधस्य न्याय्यत्वम्। पितृभक्त्यतिशयः परशुद्वितीयेनैकेनैव सकलक्षत्रवंशविजयेन पराक्रमातिशयश्च व्यज्येन्ते।

श्रीमद्भागवते स्क - २ - अध्या - ७ क्षत्रं क्षयाय विधिनोपभृतं महात्मा ब्रह्मध्रुगुज्झितपथं नरकार्तिलिप्सु। उद्धन्त्यसाववनिकण्टकमुग्रवीर्यः त्रिस्सप्तकृत्व उरुधारपरश्वथेन॥

महाभारते अरण्यपर्वान्तर्गततीर्थयात्रापर्वणि अध्यायः ७३.

ततो रामह्रदान् गच्छेत्तीर्थसेवी समाहितः।
तत्र रामेण राजेन्द्र तरसा दीप्ततेजसा॥
क्षात्रमुत्सार्य वीर्येण ह्रदाः पञ्च निवेशिताः।

पूरयित्वा नरव्याघ्र रुधिरेणेति विश्रुतम् ॥

पितरस्तर्पिताः सर्वे तथैव च पितामहाः ।

अव्यादव्याजलेशप्रसृमरकरुणासारपीयूषधारा

धाराऽपाङ्गावलोकप्रशमित विनताऽपारसंसारतापः ।

रक्षोलक्षोदरक्षोभकरमिषुवरं दक्षिणे वामहस्ते

चापं चा पन्निवृत्त्यै दधदखिलजगद्भद्रकृद्रामभद्रः ॥ १२ ॥

रामभद्रः दाशरथी रामचन्द्रः युष्मानव्याद्रक्षतात् । अव्याजः निष्कपटः लेशप्रसृमरः अल्पांशेन प्रसरन्नपि यः करुणाया दयायाः सारः श्रेष्ठोंशः स एव पीयूषम् अमृतं तस्य धारा प्रवाहः तस्या आधारः - अधिकरणं चाऽसौ अपाङ्गावलोकः - कटाक्षः तेन शमितः प्रध्वंसितः अपारः - अनन्तः संसारः - जननमरण प्रवाहः तस्य । तत्कृतः तापः दुःखं येन स तथोक्तः श्रीराम भक्तानां पुनर्जन्म नैव भवेदिति भावः । अत एव वक्ष्यत्ययं महाकविश्चतुर्नवतितमे श्लोके श्रीमद्रामायणप्रस्तावे—“ चरम तनुधृत ” इति । दक्षिणे दक्षिणहस्ते रक्षसां राक्षसानां लक्षं शतसहस्रसंख्याकानि अपरिमितानीत्यर्थः । तान्युदराणि कुक्षयः तेषां क्षोभं विदारणजनितदुःखं करोतीति तथोक्तम् । इषुवरं शरश्रेष्ठं वामहस्ते चापं कोदण्डम् । आपन्निवृत्त्यै भक्तजनविपदां निवारणाय दधत् दधानः अखिलानि समस्तानि च तानि जगन्ति भुवनानि तेषां भद्रं शुभम् । “ श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ” इत्यमरः । करोतीति

तथोक्तः । "क्विप् चे"ति क्विप् । सकललोककल्याणकर्ता रामभद्रः दाशरथिः श्रीरामचन्द्रः कोदण्डरामः । युष्मानित्यध्याहार्यम् । अव्यात् रक्षतात् । अस्मिन् श्लोके "क्षोभकरे" त्यत्र यतिभङ्गोऽस्ति । "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्" इति लक्षणात् । तथापि नायं दोषः । तथाहि—वैयाकरणसिद्धान्तकौमुद्यामजन्तस्त्रीलिङ्गप्रकरणे "नेयङुवङ्स्थानावस्त्री"ति नदीसंज्ञानिषेधात् "कथं तर्हि हापितः क्वासि हे सुभ्रु" इति भट्टिरित्याशङ्क्य प्रमाद एवायमिति समाहितम् । अत्र नागोजिभट्टः शब्देन्दुशेखरे प्रमाद इतीति प्रतीकमादाय सीताविरहपीडितत्वेन रामस्य अनवधानतालक्षणोऽत्र प्रमादः स च विरहपोषकत्वात् काव्ये गुण एवेति व्याचख्यौ । तथा अस्मिन्नपि श्लोके रक्षोलक्षकुक्षिभङ्गपोषकत्वेन विश्रमभङ्गः कृतः । स च भङ्गो विश्रमरहित इत्यप्यनेन व्यज्यते । अतोऽयं विश्रमभङ्गः काव्यस्यास्य गुण एव भवितुमर्हति । नैरन्तर्येण श्रीरामस्य शरचापधारणोक्त्या दुष्टजनशिक्षापूर्वकमवनतानवरतरक्षापक्षपातित्वं व्यज्यते । तमःप्रधानरक्षोहननोक्त्या रजस्तमोदोषपरिहरणेन मोक्षप्रद इत्यपि सूच्यते । श्रीमद्भागवते स्क-२-अध्यायः-७

अस्मत्प्रसादसुमुखः कलया कलेशः इक्ष्वाकुवंश अवतीर्य गुरोर्निदेशे । तिष्ठन् वनं सदयितानुज आविवेश यस्मिन् विरुध्य दशकन्धर आर्तिमार्च्छत् ॥

सीराग्रोत्क्षेपणावाङ्मुखितसुरनदीवारिपूरान्तरस्व-
च्छायासन्दर्शनोत्कीकृतकुरुनगरीदृष्टदोर्वीर्यसारः ।
रेवत्यापीतशेषासवरसभजनाऽऽरक्तनेत्रान्तशाली
ज्येष्ठः श्रीकृष्णमूर्तेः स भवतु भवतां कामदः कामपालः ॥१३॥

सीराग्रेत्यादि—कामपालः बलरामः भवतां युष्माकं कामदः अभीष्टप्रदायी भवतु । सीरस्य हलस्य "हलतिग्मकरौ सीर" इति रभसः । अग्रम् अन्तिमो भागः । तेनैवोत्क्षेपणमुन्नमितिः । तेनावाङ्मुखिता अधोमुखीकृता - अवाक् मुखं यस्यास्सा अवाङ्मुखी । अस्मादाचारक्विबन्तात् कर्मणि क्तः इट् । साचासौ सुरनदी गङ्गा तस्या वारिणः जलस्य यः पूरः प्रवाहः तस्यान्तरे मध्ये स्वस्याः आत्मनश्छायायाः प्रतिबिम्बस्य सन्दर्शने सम्यग्दर्शने उत्कीकृता सञ्जनितोत्कटेच्छा या कुरुनगरी हास्तिनपुरम् तया दृष्टः वीक्षितः । दोषोः बाह्वोः । "भुजबाहू प्रवेष्टो दो"रित्यमरः । यद्वीर्यं पराक्रमः तस्य सारः श्रेष्ठांशः यस्य स तथोक्तः । रेवत्या स्वभार्यया रेवतीदेव्या आपीतः भर्तृगतप्रेम्णा ईषत्पीतः तस्य शेषः अवशिष्टो य आसवः मद्यं तस्य रसः रुचिः तस्य भजनेन सेवनेन पानेनेत्यर्थः । आरक्तौ समन्ताद्रक्तौ नेत्रान्तौ अपाङ्गौ । "अपाङ्गौ नेत्रयोरन्ता" वित्यमरः । तौ शलितुं प्राप्तुं शीलमस्येति तथोक्तः । श्रीकृष्णमूर्तेः ज्येष्ठः अग्रजः सः प्रसिद्धः । कामान् भक्तवाञ्छितानि पालयति पूरयतीति कामपालः बलरामः । "रेवतीरमणो रामः कामपालो हलायुधः" इत्यमरः ।

भवतां युष्माकम् । कामान् ददातीति कामदः अभीष्टप्रदायी । "आतोऽनुपसर्गे कः" इति कः । भवतु कामपालः कामदो भवत्विति अन्वर्थनामग्रहणेनास्य महाकवेरौचित्यतत्परत्वं व्यज्यते ।

ननु रेवत्यापीतशिष्टाऽऽसवस्य सेवनमनुचितम् । अशुचिता-हेतुरिति चेत् - शृणु - शिशुपालवधकाव्ये द्वितीयसर्गे माघकविना बलरामवर्णने "रेवतीवदनोच्छिष्टपरिपूतपुटे दृशा" वित्यभिधायि । तद्व्याख्यायां मल्लिनाथसूरिणा "रतिकाले मुखं स्त्रीणां शुद्धमाखेटके शुना"मिति स्मरणान्नैवाशुचित्वम् । प्रत्युत पावनत्वमेवेत्यभिहितम् । अतो नैवाशुचिताशङ्कालेशोऽपि ।

श्रीमद्भागवते स्कं १० अध्यायः ६८—श्री शुक उवाच—
दुर्योधनसुतां राजन् लक्ष्मणां समितिञ्जयः । स्वयंवरस्थामहरत्साम्बो जाम्बवतीसुतः ॥ तं बद्ध्वा विरथीकृत्य कृच्छ्रेण कुरवो युधि । कुमारं स्वस्य कन्यां च स्वपुरं जयिनोऽविशन् ॥ तच्छ्रुत्वा नारदेनोक्तं राजन् सञ्जातमन्यवः । कुरून् प्र त्युद्यमं चक्रुरुग्रसेनप्रचोदिताः ॥ सान्त्वयित्वा तु तान् रामः सन्नद्धान् वृष्णिपुङ्गवः । जगाम हास्तिनपुरं रथेनादित्यवर्चसा ॥ उग्रसेनः क्षितीशो यद्युष्मानाज्ञापयत्प्रभुः । तदव्यग्रधियः श्रुत्वा कुरुध्वमविलम्बितम् ॥ यद्यूयं बहवस्त्वेकं जित्वाऽधर्मेण धार्मिकम् । आबध्नीताऽथ तन्मृष्ये बन्धूनामैक्य-काम्यया ॥

तमाशु समर्पयतेति शेषः—कुरवो बलदेवस्य निशम्योचुः प्रकोपिताः । आरुरुक्षत्युपानद्वै शिरो मकुटसेवितम् ॥ ये नः प्रसादोपचिता हि यादवाः आज्ञापयन्त्यद्य गतत्रपा बत ।

श्री शुक उवाच—आश्राव्य रामं दुर्वाच्यमसभ्याः प्राविशन् पुरीम् । दृष्ट्वा कुरूणां दौश्शील्यं दृष्ट्वाऽवाच्यानि चाच्युतः ॥ गृहीत्वा हलमुत्तस्थौ दहन्निव जगत्त्रयम् । लाङ्गलाग्रेण नगरमुद्विदार्य गजाह्वयम् ॥ विचकर्ष स गङ्गायां प्रहरिष्यन्नमर्षितः । आकृष्यमाणमालोक्य कौरवा जातसम्भ्रमाः ॥ तमेव शरणं जग्मुः सकुटुम्बा जिजीविषवः । अद्यापि वः पुरं ह्येतत्सूचयेद्रामविक्रमम् ॥ समुन्नतं दक्षिणतो गङ्गायां ननु दृश्यते ॥

दत्तां तत्तादृशीं वः श्रियममृतरसोद्गारिवेणुप्रणाद-
प्रस्विन्नक्लिन्नगोपीजनविवशपरीरम्भ संरम्भधन्यः ।
चञ्चत्पिञ्छावतंसस्तबकितचिकुरो रासकेलीसतृष्णः
कृष्णो मुष्णन्नतार्तीरविरतयमुनातीर वानीरवासी ॥ १४ ॥

अवतार परिगणने "रामो रामश्च कृष्णश्चे"त्येकः पाठः । "रामो रामश्च रामश्च"त्यन्यः पाठः । भगवद्वर्णन सतृष्णोऽयं कवीन्द्रः पाठ द्वयमपि स्वीकृत्य भगवन्तं श्रीकृष्णमपि प्रस्तौति—दत्तामिति । कृष्णः देवकीनन्दनः वः युष्माकं श्रियमैश्वर्यं दत्तां ददातु । अमृतस्य सुधायाः रसो द्रवः रुचिर्वा । तमुद्गरीतुं शीलमस्येति अमृतरसोद्गारी

चासौ वेणोर्वाद्यविशेषस्य प्रणादः प्रकृष्टध्वनिः। तेन प्ररि ण्णः आनन्दातिशयेन श्रीकृष्णगतकामेन च प्रकृष्टस्वेदयुक्तः। अत एव प्रक्लिन्नः अत्यन्तमार्द्रः। उदितसात्त्विकभाव इति यावत्। सचासौ गोपीनां जनः समूहः तस्य विवशाः अवशमनस्कतया कृताः परीरम्भा आलिङ्गनानि। "उपसर्गस्य घञ्यमनुष्ये बहुल"मिति उपसर्गेकारस्य दीर्घः। तेषां संरम्भः त्वरा तेन धन्यः कृतार्थः स्त्रीकृतस्वयङ्ग्रहाश्लेषैः कृतकृत्यः सम्यगाचरित भक्तावन इति गूढाशयः। चञ्चत् प्रचलत् पिञ्छं बर्हमेव अवतंसस्तबकः शिरोभूषण पुष्पगुच्छः। स एषामस्तीति तादृशाः। तारकादित्वादितच्। चिकुराः केशाः—"चिकुरोऽहौ गृहवभ्रौ केशे चञ्चलशैलयो"रिति हैमः। यस्य स तथोक्तः। रासकेल्यां रासक्रीडायां "रासो नाम बहुनर्तकीयुक्तो नृत्तविशेषः" इति श्रीधराचार्याः। तस्यां तृष्णया अत्यन्तासक्त्या सहितस्तथोक्तः। अविरतं सदा। यमुनायाः कालिन्द्याः, तीरे तटे ये वानीरा वेतसाः तेषु वस्तुं शीलमस्येति तथोक्तः। नतानां नम्राणामार्तीः क्लेशान् मुष्णन् अपहरन् कृष्णः देवकीनन्दनः वः युष्मभ्यं तत्तादृशीं निरुपमां श्रियमैश्वर्यं दत्तां ददातु।

श्रीमद्भागवते स्कं १० अध्यायः २९. श्री शुक उवाच—
भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः। वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः॥ दृष्ट्वा कुमुद्वन्तमखण्डमण्डलं रमाऽऽननाभं नवकुङ्कुमारुणम्। वनं च तत्कोमलगोभिरञ्जितं जगौ कलं वामदृशां

मनोहरम् ॥ निशम्य गीतं तदनङ्गवर्धनं व्रजस्त्रियः कृष्णगृहीतमानसाः । आजग्मुरन्योन्य मलक्षितोद्यमाः स यत्र कान्तो जवलोल कुण्डलाः ॥

गोप्य ऊचुः— व्यक्तं भवान् व्रजजनार्तिहरोऽभिजान्वोः देवो य आदिपुरुषः सुरलोकगोप्ता । तन्नो विधेहि करपङ्कजमार्तबन्धो तप्तस्तनेषु च शिरस्सु च किङ्करीणाम् ॥ श्री शुक उवाच—इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः । प्रहस्य सदयं गोपीरात्मारामोप्यरीरमत् ॥ अध्यायः ३३—तत्रारभत गोविन्दो रासक्रीडामनुव्रतैः । स्त्रीरत्नैरन्वितः प्रीतैरन्योन्याऽऽबद्धबाहुभिः ॥

कल्यादौ प्रागकल्यक्रमरुचिरचनां नीचमार्गोचितां यः
कुर्वन् यज्ञेषु निन्दामपिच करुणया प्राणिहिंसात्मकेषु ।
स्वच्छामचिछन्त नित्य श्रुतिगणविहितां पद्धतिं बुद्धरूपः
सोऽयं देवो मुदे वो भवतु भवतुषप्लोषनिश्शेषकारी ॥१५॥

बुद्धरूपो देवः धृतबुद्धावतारः श्रीमहाविष्णुः वो युष्माकं मुदे सन्तोषाय भवतु ॥

बुद्धरूपः धृतबुद्धावतारः । कलेः कलियुगस्य आदौ प्राक् प्रथमतः नीचः अधमः पापभूयिष्ठः मार्गः पन्थाः येषां तेषामुचितां योग्याम् । अकल्यः अशुभश्चासौ क्रमः विधानम् अनुक्रमो वा । "क्रमश्चानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च" इति मेदिनी ।

तस्मिन् रुचेः इच्छाया रचना कल्पना तथोक्ता। तां करुणया दयया प्राणिनां जन्तूनां हिंसा वधः आत्मा स्वरूपं येषां तेषु यज्ञेषु क्रतुषु देवपूजासु वा। "यज देव पूजादिषु" अस्माद्यजयाचयतविच्छप्रच्छ रक्षोनङि"ति नङ् श्चुत्वम्। निन्दाम् उपालम्भमपि च कुर्वन्। नित्याः त्रिकालाबाध्याः याः श्रुतयः वेदास्तासां गणैः समूहैः। "अनन्ता वै वेदाः"। विहितां चोदितां स्वच्छाम् अतिनिर्मलां पद्धतिं मार्गम्। "हिमकाषिहतिषु चे"ति पादशब्दस्य पदादेशः। अच्छिन्त नाशितवान्। भवः संसारः स एव तुषः धान्यत्वक्। रूपकम् तस्य प्लोषः दाहः। प्लुष दाहे घञ्। तेन निश्शेषकारी ध्वंसनशीलः। भवबन्धच्छेदीति यावत्। सोऽयं देवः वः युष्माकं मुदे सन्तोषाय भवतु।

यद्यप्ययमार्गप्रवर्तको बुद्धः भवच्छेदीति विरुद्धम्। तथापि तदानीन्तना जना निष्करुणाः स्वार्थैकपराः सन्तो देवपूजाव्याजेनापरिमितां जन्तुहिंसां कुर्वन्त आसन्। तद्वारणायावतीर्णः श्रीमन्नारायणो बुद्धरूपोऽनुचितकर्मभ्यो निवर्तनाय यज्ञादिष्वरुचिकल्पनां निन्दाञ्चाकरोत्। तेनाऽधर्माभ्युत्थानं वारितं भवति। ततो हिंसापेत देव पूजादिकं प्रवर्तते। तेन धर्मोऽभिवर्धितो भवति। एवं क्रमशः भवार्णवा ज्जना उत्तीर्णा भवेयुरित्येव भवतुषप्लोषनिश्शेषकारी समभावयत्। अतो बुद्धस्य भवनिवारकत्वं सूपपन्नमेव इत्यलमति विस्तरेण॥

मत्स्य पुराणे अध्यायः २४ पुनश्च वेदमार्गो हि निन्दितो नवमे भवे। स्थापितं नास्तिकमतं वेदमार्ग विरोध कृत्॥

श्री मद्भागवते स्कं-२. अध्यायः ७. देवद्विषां निगमवर्त्म विनिष्ठितानां (त्रिपुरैः) पूर्भिर्मयेन रचिताभिरदृश्यतूर्भिः। (देवादिभिरप्यलक्ष्य वेग भिः) लोकान् घ्नतां मतिविमोह मतिप्रलोभवेषं विधाय बहु भाष्यत औपधर्म्यम्॥

(धर्मवञ्चासमानमधर्मं, पाषण्डधर्मम्) अनेन त्रिपुरदाहकाले बुद्धावतार इति गम्यते॥

मूर्च्छन्म्लेच्छप्रपञ्चव्यतिकर बलवज्जम्भमाणातिवेल-
क्रुध्यत्तिष्यप्रतापप्रसर कबलिताशेष वेदोक्तधर्माम्।
त्रातुंगां विष्णुशर्मक्षितिसुरसदने शम्बले सम्भविष्यन्
कल्की सर्वान् समोदं स घटयतु शुभांस्तेजसाऽर्कोभवन्वः॥

कल्की कलिकरूपः श्रीमहाविष्णुः वः युष्माकं सर्वान् शुभान् मङ्गलकरसन्निवेशान् समोदं सन्तोषेण युक्तं यथा तथा घटयतु प्रापयतु। मूर्च्छन् व्याप्नुवन् यः म्लेच्छानां श्रुतिविहिताऽऽचार-शून्यानां प्रपञ्चः लोकः श्रुतिबाह्यजनसमूह इत्यर्थः। तस्य व्यतिकरः साङ्कर्यं म्लेच्छजनैर्मेलनं तेन बलवदधिकं जृम्भमाणः विजृम्भमाणः अतिवेलमत्यधिकं क्रुध्यन् क्रोधयुक्तश्चासौ तिष्यः कलिः "तिष्यः पुष्ये कलियुग" इत्यमरः। तस्य प्रतापः पराक्रमः, तस्य प्रसरः

व्याप्तिः तेन कवलितः नाशितः, अशेषः समस्तः वेदैः श्रुतिभिः उक्तो विहितः धर्मः यस्याः सा तथोक्ता ताम्। यद्यपि धर्मान्ताद्बहुव्रीहेरनिचा भाव्यम् अथापि "धर्मादनिच् केवला"दिति केवलशब्दाद्बहुपदबहुव्रीहेरनिज्ञ भवति। पर-स्वधर्म इत्यादिवत्। गांभूमिं तत्स्थजनानित्यर्थः। "गौर्नाऽऽदित्य बलीवर्दे किरणक्रतुभेदयोः। स्त्रीतुस्याद्दिशि भारत्यां भूमौ च सुरभावपि॥ इत्यमरः। त्रातुं रक्षितुं शम्बले तन्नामकग्रामे विष्णुशर्मा तन्नामकश्चासौ क्षितिसुरः विप्रः तस्य सदने गृहे सम्भविष्यन् जनिष्यमाणः तेजसा कान्त्या अर्कीभवन् सूर्य इव प्रकाशमान इत्यर्थः। सः अधर्मविध्वंसकः धर्मरक्षणशीलश्च कल्की कल्क्यवतारः श्रीमहाविष्णुः वः युष्माकं शुभान् कल्याणप्रदान् सर्वानैहिकामुष्मिक भोगानिति शेषः। समोदम् आनन्देन सहितं यथा घटयतु प्रापयतु। "कल्याणं मङ्गलं शुभम्" इति शुभशब्दस्य क्लीबत्वात्। "सर्वं समोदं घटयतु शुभम्" इति युक्तः पाठः।

श्रीमद्भागवते स्कं १२. अध्यायः २—ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया। कालेन कलिना राजन् नंक्ष्यत्यायुर्बलं स्मृतिः॥ वित्तमेव कलौ नृणां जन्माचारगुणोदयः। दाम्पत्येऽभिरुचिर्हेतुर्वाक्छौर्यं व्यावहारिके। स्त्रीत्वे पुंस्त्वे चाभिरतिर्विप्रत्वे सूत्रमेव हि॥ इत्थं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डलम्। ब्रह्मविट् क्षत्र शूद्राणां यो बली भविता नृपः॥ प्रजास्तु लुब्धै राजन्यैर्निर्घृणैर्द-

स्युधर्मभिः । आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम् ॥ शाकमूलामिषक्षौद्र फलपुष्पाष्टि (बीज) भोजनाः । वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम् । पाषण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु ॥ विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु । इत्थं कलौ गतप्राये जनेषु गतधर्मसु ॥ धर्मत्राणाय सत्वेन भगवानवरिष्यति । शम्बलग्राम-मुख्यस्य ब्राह्मणस्य महात्मनः । भवने विष्णुयशसः कल्किः प्रादुर्भ-विष्यति ॥ अश्वमाशु समारुह्य देवदत्तं जगत्पतिः । असिनाऽसाधु-दमनोष्टैश्वर्यगुणान्वितः ॥ विचरन्नाशुनाक्षोण्यां हयेनाप्रतिमद्युतिः । नृपलिङ्गच्छदो दस्यून् को देशो(?) निहनिष्यति ॥

आत्मीयाज्ञाविधेयीकृत गिरिशहरि ब्रह्मदेहार्धवक्षो
वक्त्राब्जाऽऽरोपित स्त्रीप्रथितनिजभुजाविक्रमोपक्रमश्रीः ।
त्रैलोक्यस्यापि जेता मृदुकुसुमशरैरद्भुतः कोऽपि धन्वी
केलीकालेऽनुकूलो भवतु विरहिणीघस्मरो वः स्मरोऽयम् ॥

तत्पुत्रं प्रस्तौति—आत्मीयेत्यादि । स्मरः मन्मथः वः युष्माकं केलीकाले क्रीडा (रति) समये अनुकूलः हितो भवतु ॥

आत्मीया स्वकीया आज्ञा शासनं, तस्या विधेयीकृताः वशीकृताश्च ते गिरिशः शिवः । गिरेर्मत्वर्थे लोमादित्वाच्छः । हरिर्विष्णुः । ब्रह्मा चतुराननश्च । तेषां यथाक्रमं देहार्धे शरीरार्धभागे वामर्धं इत्यर्थः । वक्षसि उरसि वक्त्रे मुखे आरोपिताः अधिष्ठापिताः याः स्त्रियः गौरीलक्ष्मी सरस्वत्यः ताभिः प्रथितः प्रख्यातः । निजो

तौ भुजौ बाहू । तयो विंक्रमः पराक्रमः तस्योपक्रमः कार्यं, सिद्ध्युपायज्ञानपूर्वकारम्भः । "उपक्रमस्तूपधायां ज्ञात्वारम्भे च विक्रमे" इति मेदिनी । तस्य वा स एव वा श्रीः शोभा सम्पद्वा यस्य स तथोक्तः । किञ्चायं विशेषः - मृदूनि कोमलानि च तानि कुसुमानि पुष्पाण्येव शरा बाणाः तैः त्रैलोक्यस्य स्वर्गमर्त्यपाताललोकत्रयस्यापि । त्रयाणां लोकानां समाहारस्त्रिलोकी । "संख्यापूर्वको द्विगु"रिति द्विगुः अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट इति स्त्रीत्वम् । द्विगोरिति ङीप् । ब्राह्मणादित्वात्स्वार्थे ष्यञ् । जेता जयी । अद्भुतः कोमलाः शराः विजयस्तु लोकत्रयस्येति आश्चर्यकरः । कोऽपि निर्वक्तुमशक्यः । धन्वी धानुष्कः । धन्वा धनुः सोऽस्यास्तीति मत्वर्थे "व्रीह्यादिभ्यश्चे"तीनिः । "धन्वा तु मरुदेशे ना क्लीबं चापे स्थलेऽपि च" इति मेदिनी । विरहिणीनां वियोगिनीनां घस्मरः भक्षणशीलः । कामजननेनाऽतीव बाधक इत्यर्थः । "भक्षको घस्मरोऽद्मर" इत्यमरः । "सृघस्यदः क्मरजि"ति घसेः क्मरच् । अयं मनसिजत्वात् सर्वसन्निहितः स्मरः मदनः वः युष्माकं केलीकाले क्रीडा (रति) समये अनुकूलो हितः साहाय्यकारी भवतु ॥

शिवपुराणे अध्यायः - २. ब्रह्माऽहं मानसान् पुत्रान् असर्जं च यदा मुने । तदा मन्मनसो जाता चारुरूपा वराङ्गना ॥ दृष्ट्वाऽहं तां समुत्थाय चिन्तयन् हरिहृद्गतम् । एवं चिन्तयतो मे हि ब्रह्मणो मुनिसत्तम ॥ मानसः पुरुषो मञ्जुराविर्भूतो महाद्भुतः । पुरुष

उवाच—किं करिष्याम्यहं कर्म ब्रह्मं स्तत्र नियोजय। ब्रह्मोवाच—अहं वा वासुदेवो वा स्थाणुर्वा पुरुषोत्तम। भविष्यामस्तव वशे किमन्ये प्राणधारिणः॥ त्वत्पुष्पबाणस्य सदा सुखलक्ष्यं मनोऽद्भुतम्। सर्वेषां प्राणिनां नित्यं सदा मदकरो भवान्॥

पक्षाग्रक्षेपलीलाविसर दुरुमरुद्वेगनिश्चूषिताम्भ-
श्शून्याम्भोराशिगर्भस्फुटतरजलावासवित्रासकारी।
दास्यं मातुर्व्युदस्यन्नमृतकलशहृत्त्रस्यदिन्द्रस्य हस्ता-
द्रक्षेच्चक्षुःश्रवेभ्यस्सकलविषभयं विक्षिपन् पक्षिराजः॥१८॥

श्रीमहाविष्णु परिवारं क्रमशः प्रस्तौति पक्षाग्रेत्यदिना—पक्षिणां शकुन्तानां राजा प्रभुः गरुत्मान्। युष्मानिति शेषः। चक्षुषी एव श्रवसी कर्णौ येषां ते चक्षुःश्रवसः सर्पाः, तेभ्यः सकलात् समस्तात् विषाद्भयं विक्षिपन् निरस्यन् रक्षेत् पायात्।

पक्षयोः गरुतोः अग्राणि अन्त्यभागाः तेषां क्षेपः प्रेरणं घूर्णनं वा। स एव लीला क्रीडा, तस्यां तया वा विसरन् विशेषेण प्रसरन् उरुः महांश्चासौ मरुत् वायुः। तस्य वेगः शीघ्रता तेन निश्चूषितम् अपहृतम् अम्भः जलं यस्मिन् सः अत एव शून्यः रिक्तः नष्टोदक इति यावत्। अम्भोराशिः सागरः, तस्य गर्भः मध्यं तस्मिन् स्फुटतराः जलाभावेन सुव्यक्ताः जलावासाः जलौकसः तिमितिमिङ्गिलादयः तेषां वित्रासं भयं कर्तुं शीलमस्येति तथोक्तः। "सुप्यजातौ"विति णिनिः। मातुः जनन्या विनताया

दास्यं कपटपणप्राप्तदासीभावं सेवकत्वं व्युदस्यन् विक्षिपन् अपहरन्नित्यर्थः। त्रस्यन् बिभ्यच्चासौ इन्द्रः मघवा तस्य हस्तात् अमृतं सुधा तस्य कलशः पात्रं तं हरति बलादाददातीति तथोक्तः। "क्विप् चे"ति क्विप्। तुक्। पक्षिराजो गरुत्मान् सकलविषाद्भयं समस्तगरलाद्भियम्। "पञ्चमी भये"नेति पञ्चमीतत्पुरुषः। वृश्चिकसर्पादिभ्यो जायमानं सर्वं भयं व्युदस्यन् नाशयन्नित्यर्थः। रक्षेत् पायात्॥

पद्मपुराणे सृष्टिखण्डे अध्यायः ४४. गरुड उवाच—अमृतं पाययिष्यामि मात र्मा विमुखी भव। एवमुक्त्वा गरुत्मान् स उध्दृत्य सागराज्जलम्॥ जगामाकाशमाविश्य खगश्चायं मनोजवः। पक्षवातेन तस्यैव रजस्समुद्गतं बहु॥ आनयन्तं च पीयूषं खगं गत्वा शतक्रतुः। विशिखैरग्निसङ्काशै र्नयामि यममन्दिरम्॥

गरुड उवाच—नयामि तव पीयूषं दर्शयस्व पराक्रमम्। ततस्तु कोपितो जिष्णुर्जघान कुलिशेन तम्॥ स्वं मोघं भिदुरं दृष्ट्वा हरिर्भीतोऽभवत्तदा॥

निद्रामुद्राविराजन्मुरमथनतनूलिप्तकर्पूरपूर-
श्रीखण्डक्षोदसङ्ग द्विगुणितधवलोत्कर्षसाभोगभोगः।
आधारस्तम्भशोभां दधदिव जगतां केशवाम्भोधिकन्या
लीलाविस्रम्भसाक्षी घटयतु पटुतां वो गिरो भोगिराजः॥

निद्रेत्यादि। भोगिराजः सर्पराडादिशेषः वः युष्माकं गिरो वाचः। जात्येकवचनम्। गिरामित्यर्थः। वागिन्द्रियस्य वा पटुतां

सामर्थ्यं नैपुण्यं वा घटयतु सम्पादयतु ॥ निद्रया सुषुप्त्या या मुद्रा मुकुलता । यद्वा निद्रायाः या मुद्रा चिह्नं तया विराजन्ती प्रकाशमानाचासौ मुरमथनस्य मुरारेः या तनूः देहः तत्र तस्या वा लिप्तः चर्चितः कर्पूरस्य पूरः प्रवाहः तद्वज इत्यर्थः । श्रीखण्डस्य चन्दनस्य क्षोदः चूर्णंच तयोः सङ्गः सम्बन्धः लेपः तेन द्विगुणितश्चासौ धवललिमा श्वेतवर्णः तस्य उत्कर्षः आधिक्यम् । तस्य साऽऽभोगः परिपूर्णताविशिष्टः भोगः देहः यस्य स तथोक्तः । स्वतस्सिद्धश्वेतवर्णः मुरारिदेहलिप्त कर्पूरचन्दनरजोभिरतिशयितोऽभूत् ॥ "आभोगः परिपूर्णता, भोगस्सुखेस्त्र्यादि भृतावहेश्च फणकाययो" रित्युभयत्राप्यमरः । जगतां लोकानाम् आधारस्तम्भस्य प्रधानस्तम्भस्य शोभां कान्तिमिव कान्तिं दधत् वहन् केशवः श्रीमहाविष्णुः अम्भोधिकन्या लक्ष्मीश्च तयोः लीलासु अक्षादिक्रीडासु । "लीलां विदुः केलिविलासखेला शृङ्गारभावप्रभवक्रियासु" इति विश्वः । यः विश्रम्भः प्रणयकलहः तत्र साक्षी द्रष्टा । जयापजययोः साक्षिभूतः । "विस्रम्भः केलिकलहे विश्वासे प्रणये वध" इति विश्वः । भोगिराजः सर्पराडादिशेषः वः युष्माकं गिरः वाचः । जात्यैकवचनम् । गिरां वागिन्द्रियस्य वा पटुतां सामर्थ्यं कौशलं घटयतु सम्पादयतु ॥

कालिकापुराणे अध्यायः—२७. अनन्तस्तत्र गत्वा तु यत्र क्षीरोदसागरः । तत्र स्वयं श्रिया युक्तं सुषुप्सन्तं जनार्दनम् ॥ तस्योपधानमकरोदनन्तो दक्षिणां फणाम् । उत्तरां पादयोश्चक्रे उपधानं

महाबलः ॥ एवं कृत्वा स्वकं कायं शयनीयं तदा हरेः । दधार शिरसाऽनन्तः स्वयमेव स्वकां तनुम् ॥

लक्ष्मीकण्ठाभिरामो मुरमथनमुखाम्भोजसम्भूतवात
व्राताध्मात प्रभूतस्तनितबधिरितस्फीतरोदोऽन्तरालः ।
अन्तःसन्तापशान्त्यै भवतु भवतुदः सन्ततं कान्तिपूर-
स्मेरज्योत्स्नावितानैः शशिकरनिकरं सञ्चयन् पाञ्चजन्यः ॥

श्रीमहाविष्णोरायुधानि प्रस्तौति—पाञ्चजन्यः श्रीमहाविष्णु-शङ्खः । युष्माकमिति शेषः । अन्तस्सन्तापानाम् आधीनां शान्त्यै शमाय भवतु ।

लक्ष्म्याः श्रियः कण्ठः गलः स इव (उपमा) अभिरामः मनोहरः । मुरमथनस्य मुरारेः मुखं वक्त्रमेव अम्भोजं पद्मम् । वातसम्भवरूपप्रकृतोपयोगायाऽम्भोजे मुखत्वारोपस्याऽऽवश्यकत्वात् परिणामालङ्कारः । मतान्तरे रूपकम् । तस्मात्सम्भूताः सम्यगुत्पन्नाः ये वाताः मरुतः तेषां व्रातः समूहः तेन आध्मातं पूरणम् । भावे क्तः । तेन प्रभूतं जातं यत् स्तनितं ध्वनिः तेन बधिरितं बधिरीकृतम् । “ सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्य ” इति क्विबन्तात् कर्मणिक्तः । स्फीतं विस्तृतं रोदसोर्यदन्तरालं द्यावापृथिव्योर्मध्यप्रदेशः येन स तथोक्तः भवस्य जननमरणरूपसंसारस्य तुदः नाशकः । तुद व्यथने इत्यस्माद्धातोः “ इगुपधज्ञाप्रीकिरः क ” इति कर्तरि कः । संसार बन्धविच्छेदकः । कान्तेः पूराः प्रवाहाः त एव स्मेराः विकसिता

ज्योत्स्ना: चन्द्रिका: तासां वितानै: समूहैः शशिनः चन्द्रस्य करा: किरणाः तेषां निचयं समूहं सञ्चयन् राशीकुर्वन्निवेति गम्योत्प्रेक्षा। पाञ्चजन्यः श्रीमहाविष्णुशङ्खः। "शङ्खो लक्ष्मीपतेः पाञ्चजन्य" इत्यमर:। पञ्चजनादिति यञ्। युष्माकमिति शेषः। अन्तस्सन्तापानाम् आधीनां शान्त्यै शमाय सततं सर्वदा भवतु॥

पञ्चजनाख्यराक्षसस्य अस्थिभूतः पाञ्चजन्य:। तदुक्तं हरिवंशे अध्याय: ८६. समुद्रः प्रत्युवाचेदं दैत्यः पञ्चजनो महान्। तिमिरूपेण तं बालं ग्रस्तवानिति माधव॥ स पञ्चजनमासाद्य जघान पुरुषोत्तमः। स तु पञ्चजनं हत्वा शङ्खं लेभे जनार्दनः॥ भगवद्गीतायाम् अध्यायः—पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः। पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः॥

पायाद्वैकुण्ठधाम्नः करिकृतकरुणाऽऽक्रन्दमाकर्ण्य तूर्णं
शय्योत्थायं सवेगोद्धुरपदगमनस्रस्तपीताम्बरस्य।
कोपात्साटोपमग्रप्रहितमहितहृत्पद्मसद्मास्रविस्रं
चक्रं चक्रन्ददुग्राग्रहभर भरितग्राहनिग्राहि तन्नः॥ २१॥

वैकुण्ठधाम्नः श्रीमहाविष्णोः चक्रं चक्रायुधं सुदर्शनं वः युष्मान् पायात् रक्षतु॥ करिणा गजेन्द्रेण कृतः यः करुणाऽऽक्रन्दः दैन्येन कृतो विलापः आर्तनादः तमाकर्ण्य श्रुत्वा तूर्णं शीघ्रं शय्यायाः शयनीयात् उत्थाय शय्योत्थायं शय्यातस्त्वरयोत्थाय। "अपादाने परीप्सायामिति त्वरायां गम्यमानायां णमुल्। वेगेन सहितं सवेगम्।

उध्दुरं तीव्रं च यत् पदाभ्यां पदयोर्वा गमनं यानं तेन स्रस्तं गलितं पीतं हरिद्राऽऽभं च अम्बरं वसनं यस्य स तथोक्तः। तस्य कोपात् क्रोधात् आटोपेन सम्भ्रमेण सहितं यथा तथा अग्रे पुरतः प्रहितं प्रेषितम् अहितानां शत्रूणां हृन्दि हृदयानि पद्मानि सरोजानीव तानि सद्म निवासस्थानं यस्य तच्च तत् अस्रं रक्तं तेन विस्रम् आमगन्धयुक्तं तथोक्तम्। "विस्रं स्यादामगन्धी"त्यमरः। चक्रन्दन् रोरुवन्। उग्रः तीव्रश्चासौ आग्रहः कोपः तस्य भरः अतिशयः तेन भरितः पूर्णश्च यः ग्राहः मकरः तं निग्रहीतुं शीलमस्येति तथोक्तम्। ताच्छील्ये णिनिः। नक्रसंहारकं वैकुण्ठधाम्नः श्रीमहाविष्णोः चक्रं सुदर्शनाख्यामायुधंवः युष्मान् पायात् रक्षतु।

शय्योत्थायमिति प्रयोगेणाऽस्य कवीन्द्रस्य व्याकृतिपाण्डित्यं प्रयोगरहस्य विज्ञानं च प्रतीयेते॥ श्रीमद्भागवते स्कं ८ अध्यायः-२ तत्रैकदा तद्गिरिकाननाशयः करेणुभिर्वारणयूथपश्चरन्। सकण्टकं कीचकवेणुवेत्रवद्विशालगुल्मं प्ररुजन् वनस्पतीन्॥ सरोऽनिलं पङ्कज-रेणुरूषितं जिघ्रन्विदूरान्मदविह्वलेक्षणः। वृतः स्वयूथेन तृषार्दितेन तत्सरोवराभ्याश मथागमद्द्रुतम्॥ तं तत्र कश्चिन्नृप दैवचादितो ग्राहो बलीयां श्चरणौ रुषाच्चग्रहीत्। यदृच्छयैवं व्यसन गतो गजो यथाबलं सोऽतिबलो विचक्रमे॥ ततो गजेन्द्रस्य मनो बलौजसां कालेन वीर्येण महानभूद्व्ययः। अपारयन्नात्मविमोक्षणे चिरं दध्याविमां

बुद्धिमथाभ्यपद्यत ॥ यः कश्चनेशो बलिनोऽन्तकोरगात्प्रचण्डवेगादभिधावतो भृशम् । भीतं प्रपन्नं परिपाति यद्भयान्मृत्युः प्रधावत्यरणं तमीमहि ॥

अध्यायः ३—तं तद्वदार्तमुपलभ्य जगन्निवासः स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः । छन्दोमयेन गरुडेन स उह्यमानश्चक्रायुधोऽभ्यगम दाशु यतो गजेन्द्रः ॥ तं वीक्ष्य पीडितमजस्सहसाऽवतीर्य सग्राहमाशु सरसः कृपयोज्जहार । ग्राहाद्विपाटितमुखादरिणा गजेन्द्रः सम्पश्यतां हरिरमूमुचदुस्त्रियाणाम् ॥

मूर्तेवाज्ञा मुरारेः परमपद महोदार वैकुण्ठपुर्या
वैकुण्ठस्योपकण्ठाऽर्थिभिरमरवरैर्याच्यमानस्सकाकु ।
ल्लिङ्गैरङ्गेषु विष्णोस्सततमभिगतो नायकस्सैनिकानां
विष्वक्सेनः स विष्व क्समुपनयतु वो द्राक् कृपां चक्रपाणेः ॥

श्रीमहाविष्णुपरिवारं प्रस्तौति—विष्वक्सेनः वः युष्माकं चक्रपाणेः कृपां दयां समुपयतु प्रापयतु ।

मुरारेः श्रीमन्नारायणस्य मूर्ता देहधारिणी आज्ञा शासनमिव स्थितः, उत्प्रेक्षा । परमपदं प्राप्यस्थानेषु महोत्कृष्टं स्थानं महोदारा अत्यधिकवितरणशीला ऋजुस्वभावा वा वैकुण्ठपुरी तस्यां वैकुण्ठस्य श्रीमहाविष्णोः विगता कुण्ठा नाशो यस्मात्तद्विकुण्ठं नगरं, विकुण्ठमेव वैकुण्ठम् । प्रज्ञादित्वात् स्वार्थेऽण् । विकुण्ठं नाशरहितं ज्ञानं स्थानं वा

स्वरूपत्वेनाश्रयत्वेन वाऽस्येति वैकुण्ठः श्रीनारायणः। ज्योत्स्नादित्वादण्। उपकण्ठार्थिभिः समीपं प्राप्तुकामैः अमरवरैः सुरश्रेष्ठैः सकाकुदीनाऽऽलापैः सहितं यथा तथा याच्यमानः — श्रीमहाविष्णुसन्निधिं प्रापयेति प्रार्थ्यमानः, अङ्गेषु स्वावयवेषु विष्णोः श्रीमन्नारायणस्य लिङ्गैः ऊर्ध्वपुण्ड्रादिचिह्नैः सततं सर्वदा अभिगतः युक्तः व्याप्तो वा सैनिकानां श्रीमहाविष्णुभटानां नायकः अधिपतिः सेनानायकः सः तादृशः विष्वक् समन्ततः सेना वाहिनी यस्य स विष्वक्सेनः तन्नामकः श्रीमहाविष्णोः सेनानीः वः युष्माकं चक्रपाणेः श्रीमहाविष्णोः कृपां दयां द्राक् शीघ्रं विष्वक् समन्ततः समुपनयतु प्रापयतु।

कालिकापुराणे अध्याय: ८२. निर्माल्यधारी विष्णोस्तु विष्वक्सेनश्चतुर्भुजः। शङ्खचक्रगदापाणिर्दीर्घश्मश्रुर्जटाधरः॥ रक्तपिङ्गलवर्णस्तु सितपद्मोपरि स्थितः

ब्रह्माण्डाकाण्डदाह प्रसजनजनितोत्ताल कोलाहलेन
त्रस्ते लोके समस्ते सपदि सविपदि क्रूरहालाहलेन।
वृन्दैर्वृन्दारकाणां विधिविधुहरिदीशादिभिर्यस्तुतस्तं
जम्बूलीला मनम्बूकृत मनय दसौ साम्बमूर्तिः स वोऽव्यात्॥

त्रिमूर्तिषु क्रमप्राप्त साम्बमूर्ति प्रस्तौति — साम्बमूर्तिः अर्धनारीश्वरः सदाशिव. वः युष्मान् अव्यात् रक्षतु॥ ब्रह्माण्डस्य समस्तप्रपञ्चस्य अकाण्डे हठात् आकस्मिको दाहः प्लोषः तस्य

प्रसजनं प्रसक्तिः तेन जनितः उत्पादितः उत्तालः अत्यधिकः कोलाहलः कलकलः येन स तथोक्तः । क्रूरः भयङ्करः यो हालाहलः कालकूटविषं तेन विपदा आपदा सहिते तथोक्ते समस्ते सकले लोके प्रपञ्चे सपदि तत्क्षणं त्रस्ते भीते सति विधिः ब्रह्मा विधुः विष्णुः हरिर्दीशाः दिक्पतय इन्द्रादयः आदिः आदयो वा येषां ते तथोक्ताः । तैः बृन्दारकाणां देवानां बृन्दैः समूहैः यः स्तुतः नुतः अम्बया सहिता साम्बा सा मूर्तिर्यस्य स तथोक्तः । सदाशिवः । हालाहलभक्षणे जगज्जननी गौरी स्वाङ्गीकारमदादि त्यनेन सूच्यते । अनम्बूकृतं शीकरेणाप्यवशिष्टेन शून्यं यथा तथा कृतं हालाहलं विषं जम्ब्वाः जम्बूफलस्य लीलां विलासमिव विलास मनयत् प्रापयत् । निरवशेषं निश्शङ्क मभक्षयदिति भावः । सोऽसौ दयासागरोऽवाङ्मानसगोचरमहिमा साम्बमूर्तिः सदाशिवः वः युष्मान् अव्यात् रक्षतु ॥ श्रीमद्भागवते स्कं ७ अध्यायः ७.

निर्मथ्यमानादुदधेरभूद्विषं महोल्बणं हालहलाह्व मग्रतः ।
सम्भ्रान्तमीनोन्मकराऽहि कच्छपा त्तिमिद्विपग्राहतिमिङ्गिलाकुलात् ॥
तदुग्रवेगं दिशि दिश्युपर्यधो विसर्पदुत्सर्प दसह्य मप्रति ।
भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा अरक्ष्यमाणाः शरणं सदाशिवम् ॥

प्रजापतय ऊचुः— देवदेव महादेव भूतात्मन् भूतभावन । त्राहि नः शरणापन्नां स्त्रैलोक्यदहनाद्विषात् ॥ त्वमेवैकः सर्वजगतामीश्वरो बन्धमोक्षयोः । तं त्वामर्चन्ति कुशलाः प्रपन्नार्तिहरं गुरुम् ॥

न ते गिरित्राखिललोकपालविरिञ्चिवैकुण्ठसुरेन्द्रगम्यम् । ज्योतिः परं यत्र रजस्तमश्च सत्वं न यद्ब्रह्म निरस्तभेदम् ॥ तद्वीक्ष्य व्यसनं तासां कृपया भृशपीडितः । सर्वभूतसुहृद्देव इदमाह प्रियां सतीम् ॥ आसां प्राणपरीप्सूनां विधेयमभयं हि नः । एतावांश्च प्रभोरर्थो यद्दीनपरिरक्षणम् ॥ एवमामन्त्र्य भगवान् भवानीं विश्वभावनः । तद्विषं जग्धुमारेभे तं भवा न्यन्वमोदत ॥ ततः करतलीकृत्य व्यापि हालाहलं विषम् । अभक्षयन्महादेवः कृपया भूतभावनः ॥ तस्यापि दर्शयामास स्ववीर्यं जलकल्मषम् । यच्चकार गले नीलं तच्च साधोर्विभूषणम् ॥ तप्यन्तु लोकतापेन प्रायशस्साधवो जनाः । परमाराधनं तद्धि पुरुषस्याऽखिलाऽऽत्मनः ॥

संरम्भोज्जृम्भिजम्भद्विषदतुलभुजस्तम्भगम्भीरदम्भ-
स्तम्भोद्यद्दर्वशुम्भप्रमुखपशुगणालम्भदीक्षैकदक्षा ।
वल्गत्खड्गाग्रकृत्ताद्भुतमहिषशिरोनर्तनोदात्तचित्ता-
द्त्तां वित्तानि तत्तादृशमहिमवती हैमवत्यम्बिका वः ॥२४॥

सदाशिवपत्नीं प्रस्तौति — अम्बिका जगज्जननी हैमवती पार्वती वः युष्मभ्यं वित्तानि धनानि दत्तां यच्छतु ।

संरम्भेण आटोपेन उज्जृम्भी विजृम्भमाणो यो जम्भद्विषन् जम्भारिरिन्द्रः तस्य अतुलौ निरुपमौ भुजौ बाहू स्तम्भाविवेत्युपमितसमासः । पटीयांसौ तयोः गम्भीरः अत्यधिक इत्यर्थः । यो दम्भः कपटं तस्य स्तम्भेन निरोधेन उद्यन् वर्धमानो गर्वः अहङ्कारो येषां

ते च ते शुम्भः तन्नामा राक्षसः प्रमुखः प्रधानः आदिर्वा येषां त एव पशवस्तेषाम्। रूपकम्। आलम्भनीयप्राणिनां गणाः समूहास्तेषामालम्भः संहारः तत्र या दीक्षा आग्रहः नियमो वा तस्याम् एका अद्वितीया निरतिशया दक्षा समर्था इन्द्रजेतृशुम्भादि दैत्यसंहर्त्री। वल्गन् चलं श्चासौ खड्गः तस्याग्रम् अन्तिमो भागः धारा वा तेन कृत्तं खण्डितं अद्भुतम् विकृतरूपेण अतिमहत्त्वेन च आश्चर्यकरं यन्महिषस्य महिषासुरस्य शिरः मूर्धा। यद्वा अद्भुतः विकृतरूपेण पराक्रमातिशयेन चाश्चर्यकरो यो महिषः तस्य शिरसि नर्तनं नाट्यं तत्र उदात्तं महत् निश्शङ्कं चित्तं यस्यास्सा तथोक्ता। तत्तादृशः अनिर्वचनीयो महिमा अस्या अस्तीति तथोक्ता। अम्बिका जगज्जननी हिमवतोऽपत्यं स्त्री हैमवती पार्वती। "तस्याऽपत्य"-मित्यण्। आदिवृद्धिः। "टिड्ढाण"ञि त्यादिता ङीप्। वः युष्मभ्यं वित्तानि धनानि यद्वा ज्ञानानि। विद ज्ञान इति धातोर्भावे क्तः। दत्तां यच्छतु।

शिवपुराणोमासंहितायामध्यायः ४६ — आसीद्रम्भासुरो नाम दैत्यवंशशिरोमणिः। तस्माज्जातो महातेजा महिषो नाम दानवः॥ पराजितास्ततो देवा ब्रह्माणं शरणं ययुः। तदातिकोपपूर्णस्य विष्णोश्शम्भोश्च वक्त्रतः॥ ततोऽन्येषां च देवानां शरीरान्निर्गतं महः। सङ्घीभूयाभवन्नारी साक्षान्महिषमर्दिनी॥ स ददर्श ततो देवीं व्याप्तलोकत्रयीं रुचा।

देव्युवाच—रेमूढ रे हतप्रज्ञ व्यर्थं हि कुरुषे हठम्। एव-माभाष्य कूर्दित्वा (क्रीडित्वा) देवी सर्वकलामयी ॥ पराक्रम्यासुरं कण्ठे शूलेनोग्रेण साऽभिनत्। महासिना शिरो भित्वा न्यपाति धरणीतले ॥

वराहपुराणे—स्वायम्भुवे हतो दैत्यो वैष्णव्या मन्दरे गिरौ। महिषाख्योऽपरः पश्चात्स वै चैत्रासुरः पुनः ॥ नन्दया निहतो विन्ध्ये महाबलपराक्रमः। अथ वा ज्ञानशक्तिस्सा महिषोऽज्ञानमूर्तिमान् ॥ अज्ञानं ज्ञानसाध्यं तु भवतीति न संशयः। मूर्तिपक्षे चेतिहासममूर्ते चैकवध्दृदि ॥ ख्यायते वेदवाक्यैस्तु इह सा वेदवादिभिः ॥

हस्ताग्रोदस्तसप्तार्णवसकलपयःशीकरासारवर्ष-
प्रारब्धाऽकाण्डमूर्छन्निबिडितमहिमोन्नीतमातामहश्रीः।
बाल्यक्रीडातिलौल्याद्रदशिखर समुत्क्षिप्तसर्वक्ष्माभृ-
द्देवः पायादपायान्नतजनसुलभः कोऽपि वेतण्डतुण्डः ॥२५

शिवयोः कुमारौ क्रमशः प्रस्तौति - वेतण्डतुण्डः गजमुखः श्रीगणेशः वः युष्मान् पायात् रक्षतु ॥ हस्तस्य (करि) करस्य अग्रम् अन्तिमो भागः तेनोदस्तमुत्क्षिप्तं यत् सप्तानामर्णवानां सागराणाम्। सागरोऽर्णव इत्यमरः। पयः जलं तस्य शीकराः कणाः "शीकरोऽम्बुकणः स्मृत" इत्यमरः। तेषामासारवर्षः महतीवृष्टिः तेन प्रारब्धो यः अकाण्डे हठात् मूर्छन् व्याप्नुवन् निबिडितः सान्द्रितो यो

महिमा महत्त्वं तेनोन्नीता वृद्धिं गमिता मातामहस्य हिमाद्रेः श्रीः सम्पत् येन स तथोक्तः। मुखगतौष्ण्याद्धिमीभूत सागरजलशीकरवर्षित हिमाद्रिहिमसम्पत्क इति भावः। एवं मातामहसन्तोषकृत्। अपि च बाल्ये याः क्रीडाः खेलनानि तासु अतिलौल्यात् अधिकचापल्यात् अत्यन्तासक्तेर्वा। रदस्य दन्तस्य शिखरेणाग्रेण बाल्ये द्विदन्तत्वात् दन्तयोरग्राभ्यामिति वा॥ समुत्क्षिप्ताः सुदूरमुदस्ताः सर्वे क्षमाभृतः पर्वता येन स तथोक्तः। बाल्य एव कोमलदन्ताग्राभ्यामेव सकलपर्वतानां सुदूरोत्क्षेपणादस्य निरतिशय बलाधिक्यं व्यज्यते। नताः प्रणताः ये जनास्तेषां सुखेन अनायासेन लब्धुं प्राप्तुं शक्यस्तथोक्तः। "ईषद्दुस्सु" ष्विति खल्। अनेन दयामयत्वं व्यज्यते। कोऽपि निर्देष्टुमशक्य.। अत एव देवः स्वप्रकाशाऽऽत्मभूतः वेतण्डस्य गजस्य तुण्डः मुखं यस्य सः। गजमुखो गणेशः। "वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्" इत्यमरः। वः युष्मान् अपायात्। जात्येकवचनम्। आपद्भ्य इत्यर्थः। पायात् रक्षतात्॥

ब्रह्माण्डपुराणे अध्यायः ११४—बाल्यक्रीडा-यो मातुरुत्सङ्गगतोऽथ मात्रा निवार्यमाणोऽपि बलाच्च चन्द्रम्। सङ्गोपयामास पितुर्जटासु गणाधिनाथस्य विनोद एषः॥ संवेष्टितो देवगणैर्महेशः प्रवर्तताां नृत्यमिहेत्युवाच। सन्तोषितो नूपुररावमात्राद्गणेश्वरत्वेऽभिषिषेच पुत्रम्॥ यो मातरं नृत्यगतैर्विनोदैस्तथाभिलाषैरखिलैर्विनोदैः। सन्तोषयामास तदातितुष्टं तं श्रीगणेशं शरणं प्रपद्ये॥

नतजनसुलभः । न विघ्नराजेन समोऽस्ति कश्चिद्देवो मनो-वाञ्छितसम्प्रदाता । निश्चित्य चैतत् त्रिपुरान्तकोऽपि तं पूजयामास वधे पुराणाम् ॥ धर्मार्थकामादिषु पूर्वपूज्यो देवासुरैः पूज्यत एव नित्यम् । यस्याऽर्चनं नैव विना शमस्ति तं पूर्वपूज्यं प्रथमं नमामि ॥

विध्यण्डाखण्ड भाग्योध्दुर विकटवलत्तारक प्रष्ठदैत्य-
श्रेष्ठाऽसुग्रासकुक्षिम्भरि रविपटली दुर्निरीक्ष्योग्रशक्तिः ।
वल्लीवल्लीमहाद्रुः सुरपतिविजयाऽऽनन्दसन्दोहकन्दः
स्कन्दो दद्या दमन्दां श्रिय मनवरतं पार्वतीनन्दनो वः ॥२६॥

पार्वतीनन्दः स्कन्दः कुमारस्वामी वः युष्मभ्यम् अमन्दाम् अधिकां श्रियं सम्पदं दद्यात् वितरतु ।

विध्यण्डस्य ब्रह्माण्डस्य अखण्डं सम्पूर्णं यद्भाग्यम् ऐश्वर्यं तेन उध्दुरः पटिष्ठः विकटं यथा तथा वलन् सञ्चरन् । अनुदात्तेत्वलक्षण-मात्मनेपदमनित्यमि त्यत्र शतृप्रत्ययः । तारकः तन्नामकः प्रष्ठः अग्र-गामी । "प्रष्ठोऽग्रग्रामिनी"ति निपातितः । स चासौ दैत्यः राक्षसः राक्षसप्रधानः इत्यर्थः । दित्यदित्यादित्येत्यादिना ण्यः । तस्यासूनां प्राणानां ग्रासः भक्षणं तत्र कुक्षिम्भरयः अत्यदनशीलाः । स्वोदरपूरकाः । "उभौ त्वात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरक" इत्यमरः । "भृञः कुक्ष्यात्मनोर्मुम् चे"ति वार्तिकम् । ये रवयः किरणास्तेषां पटली समुदायः अत्ररुचि पटलीति पाठो भवेत्

तया दुर्निरीक्ष्या द्रष्टुमशक्येत्यर्थः । उग्रा भयङ्करी शक्तिः आयुधविशेषः यस्य स तथोक्तः । त्रैलोक्यजेतृतारकदैत्यसंहर्तेति भावः । वल्ली तन्नाम्नी देव्येव वल्ली लता तस्या महाद्रुः महान् वृक्षः वल्लीनायक इति भावः । सावयवरूपकम् । मतान्तरे परिणामः "द्रुद्रुमाऽगमा" इत्यमरः । सुरपतिरिन्द्रः तस्य विजयः तारकादिकर्मकविजयः तेन य आनन्दसन्दोहः सन्तोषातिशयः तस्य कन्दः मूलभूतः तारकसंहारेण इन्द्रस्य विजयसम्पादक इति भावः । अनेन वज्रायुधा दस्य शक्त्यायुधस्य इन्द्रा दस्य कुमारस्वामिनश्च महत्त्वं व्यज्यते । पार्वतीनन्दनः गौरीतनयः स्कन्दः कुमारस्वामी वः युष्मभ्यम् । अमन्दामत्यधिकां श्रियं देवेन्द्रैश्वर्यसममैश्वर्यं दद्यात् यच्छतात् ॥

ब्रह्मवैवर्ते गणेशखण्डे अध्यायः ३५—या बभूव रहःक्रीडा पार्वतीशिवयोः पुरा । दृष्टस्य च सुरैश्शम्भोर्भूमौ वीर्यं पपात ह ॥ भूमिस्तदक्षिपद्वह्नौ वह्निश्च शरकानने । तत्त्वं लब्धः कृत्तिकाभिरधुना गच्छ साम्प्रतम् ॥ तवाभिषेकं विष्णुश्च करिष्यति सुरैस्सह । हनिष्यसि तारकाख्यं सर्वशस्त्रं लभिष्यसि ॥ पुत्र स्त्वं विश्वसंहर्तुस्त्वां गोप्तुमक्षमा इमाः । नाग्निं गोप्तुं यथाऽशक्तः शुष्कवृक्षः स्वकोटरे ॥

वेङ्कटाचलमाहात्म्ये कुमाराममाहात्म्ये अध्यायः—अस्या निर्झरधारायास्तपस्तेपे समीपतः । तपसा तस्य सन्तुष्टो भगवान् विष्टरश्रवाः ॥ आविर्भूय ददौ शक्तिं तस्मै सोऽपि तिरोदधे । कुमारस्तं प्रणम्याथ देवः स्वर्गं जगाम ह ॥

मार्कण्डेयपुराणे अध्यायः—वेङ्कटेशव्रतम्—वल्लीदेवसेनाख्य श्रीभूसहचरं हरिम्। सुब्रह्मण्यं समस्तेड्यं कलिदोषनिकृन्तनम् ॥ सौभाग्यदायकं विष्णुं "वेङ्कटेशं समर्चय" ॥ द्राविडभाषा स्कान्द पुराणे—एकान्तस्थां वल्लीं कामयित्वा तस्याः पितर्यागते स्कन्दो द्रुमरूपम् अगमत्। ततो बहुरूपाणि धृत्वा वल्लीमुदुवाहेति अस्तीति श्री श्री अनन्तानन्देन्द्रसरस्वतीस्वामिनोऽभणन् ॥

सम्मर्दोत्सारणोद्यत्कनकमयकनद्वेत्रदण्डप्रहार-
प्रत्युटद्यद्दीप्रहाराङ्गदमकुट दिगीशाऽऽदिकाकूक्तिहृष्टः।
तादृग्भूयःशिलादप्रबलतमतपोभाग्यभूम्नां विवर्तः
सेनानीश्चन्द्रमौलेः स भवतु भवदानन्दनोनन्दिकेशः ॥ २७

सदाशिवपरिवारं क्रमशः प्रस्तौति—नन्दिकेशः नन्दीश्वरः भवतां युष्माकम् आनन्दनः सन्तोषदायी भवतु ॥

सम्मर्दस्य सम्बाधस्य उत्सारणम् अपनयनं तस्मिन्नुद्यन् सप्रयत्नः कनकमयः सुवर्णप्रचुरः कनन् प्रकाशमानश्य यः वेत्रदण्डः द्वारपालकाधार्यमाणदण्डविशेषः तस्य प्रहारः घातः तेन प्रत्युटद्यन्ति विशीर्यन्ति दीप्राणि प्रकाशमानानि च हाराः मुक्तावल्यः अङ्गदानि भुजकीर्तयः मकुटानि तथोक्तानि किरीटानि येषां ते च ते दिगीशाः दिक्पालका इन्द्रादयः आदयो येषां तेषां देवानां काकूक्तयः "अस्माननुगृहाण सदाशिवसमीपं नय"इत्यादिभिर्दीनोक्तिभिः। "काकुः

स्त्रियां विकारो यश्शोकभीत्यादिजध्वने'' रित्यमरः। हृष्टः सन्तुष्टः तादृक् निरुपमं भूयः अधिकं शिलादस्य तन्नामकमहर्षेः प्रबलतमं महत्तमं यत्तपः तस्य तदेव वा भाग्यं पुण्यं तस्य भूम्नां समृद्धीनां विवर्तः परिणामभूतः चन्द्रमौले सदाशिवस्य सेनां नयतीति सेनानीः सेनापतिः क्विप् चेति क्विप्। सः प्रख्यातः नन्दिकेश नन्दीश्वरः भवतां युष्माकम् आनन्दनः सन्तोषदायी भवतु। नन्दिग्रहीत्यादिना कर्तरि ल्युट्। दिगीशादि काकूक्तितुष्ट इत्यनेन नन्दिना दिगीशादिभ्यो अत्युन्नतं स्थानं व्यज्यते।

शिवपुराणे शतरुद्रीय संहितायामध्यायः ६ नन्दीश्वर उवाच—प्रजाकामश्शिलादोऽभूदुक्तः पितृभिरादरात्। आराधयन्महादेवं तपसाऽतोषयद्भवम्। अस्थिशेषोऽभवत्पश्चाच्छिलादो मुनिसत्तमः। तुष्टः प्रभु स्तदा तस्मै दर्शयामास स्वां तनुम॥ शिलाद उवाच—

इच्छामि त्वत्समं पुत्रं मृत्युहीनमयोनिजम। शिव उवाच—तव पुत्रो भविष्यामि नन्दिनाम्नात्वयोनिजः। कियता चैव कालेन तदासौ जनक स्स मे॥ यज्ञाङ्गणं चकर्षाशु यज्ञार्थं यज्ञवित्तमः। ततः क्षणादहं शम्भोस्तनुजस्तस्य चाज्ञया॥ शिलादात्मजत्वं गते मय्यृषीन्द्रास्समन्ताच्च वृष्टिं व्यधुः कौसुमीं ते॥

अध्यायः—७. नन्दीश उवाच—अतपं तप उग्रं सन्मुनीनामपि दुर्लभम्। तत एव समादाय हस्तेन परमेश्वरः॥ उवाच ब्रूहि किं तेऽद्य ददामि वरमुत्तमम्। ततश्चशङ्करः स्वीयान् सस्मार

गणपान्वरान् ॥ सर्वे प्रीत्याऽभिषिञ्चध्वं मद्गणानां गतिं पतिम् । अद्यप्रभृति युष्माक मयं नन्दीश्वरः प्रभुः ॥ पितामहोऽपि भगवान् नियोगाच्छङ्करस्य वै चकार नन्दिनस्पर्वेऽभिषेकं समाहितः ॥

हावं हावं शिरांसि ज्वलति हुतभुजि स्वासिना साहसेन
छिन्ना न्याशु प्रसीदत्पशुपतिवचसा प्राप्तसम्पूर्णकामः ।
रामोत्कृत्तैः शिरोभिस्समिति पुररिपोर्भाविताऽग्र्योपहारो
गाणापत्यं प्रपन्न स्स भवदभिमतं रावण स्संविधत्ताम् ॥ २८॥

रावणः दशाननः भवतां युष्माकम् अभिमतं कामितं संविधत्तां पूरयतु ॥ साहसेन प्रकृतकर्मणा भवः प्रसीदति वा नवा जीविष्यामि वा नवा इत्यालोचनं विनैव स्वस्य आत्मनः असिना खड्गेन छिन्नानि कृत्तानि शिरांसि स्वमूर्ध्नः ज्वलिति दीप्यमाने हुतं भुंक्ते इति हुतभुक अग्निः तस्मिन् हावं हावं हुत्वा हुत्वा । "जुहोतेराभीक्ष्ण्ये णमुलि"ति णमुल् द्वित्वम् । आशु शीघ्रं प्रसीदन् अनुगृह्णंश्चासौ पशुपतिः शम्भुः । "शम्भुरीशः पशुपतिः" इत्यमरः । तस्य वचसा वरप्रदानोक्त्येत्यर्थः । प्राप्ताः लब्धाः सम्पूर्णाः कामाः वाञ्छा यस्य स तथोक्तः । समिति युद्धे । "समितिर्युधि सङ्गमे" इति हेमचन्द्रः । रामेण दाशरथिना कृत्तैः छिन्नैः शिरोभिर्मूर्धभिः भावितः सङ्कल्पितः अग्र्यः श्रेष्ठः उपहारः उपायनं येन स तथोक्तः । अनेन विशेषणद्वयेन रावणस्य धीरता भक्तिविशिष्टता च व्यज्येते । गाणापत्यं प्रमथगणाधिपतित्वम् । "दित्यदित्यादित्यपत्युत्तर पदा"

दित्यनेनैवाऽयं प्रयोगस्साध्यः कथञ्चित्। प्रयत्नः प्राप्तवान् सः परमशिवभक्ताग्रणीः रावणः दशाननः। विश्रवसो गोत्रापत्यं पुमान् रावणः शिवादित्वादण्। विश्रवश्शब्दस्य रवणादेशो गणसूत्रादादिवृद्धिश्च। भवतां युष्माकमभिमतं कामितं संविधत्ताम् पूरयतु। सीतापहरणादिघोरपापकृदयं रावणो ऽस्माकं वाञ्छितं कथं पूरयितुं पारयतीति नैव शङ्कनीयम्। स्वेन कृत्तानि श्रीरामेण खण्डितानि च स्वशिरांसि परमशिवार्पणं योऽकरो त्स रावणः सदाशिवैकान्तभक्त्या भस्मीकृतसर्वपापः परमशिवभक्ताग्रणीरस्माकं वाञ्छितानि प्रदातुं प्रभुरेव हि भवति॥ उत्तररामायणे सर्गः १०—

दशवर्षसहस्रं तु निराहारो दशाननः। पूर्णे वर्षसहस्रे तु शिरश्चाग्नो जुहाव सः॥ एवं वर्षसहस्राणि नव तस्यातिचक्रमुः। शिरांसि नव चाप्यस्य प्रविष्टानि हुताशनम्॥ अथ वर्षसहस्रे तु दशमे दशमं शिरः छेत्तुकामे दशग्रीवे प्राप्त स्तत्र पितामहः॥ पितामहस्तु सुप्रीतस्सार्थं देवैरुपस्थितः। तव तावद्दशग्रीव प्रीतोस्मीत्यभ्यभाषत॥ हुतानि यानि शीर्षाणि पूर्वं मग्नौ त्वयाऽनघ। पुनस्तानि भविष्यन्ति तथैव तव राक्षस॥

**संसारेणैव साकं निवसति भवनद्वारि यस्येन्दुमौलि**
**स्त्रातुं यं त्यक्तलज्जा परपुरुषसभाकोटवी चाम्बिकाऽभूत्।**
**कृष्णेन छिन्नदोषं तनयमिव समालिङ्ग्य यं वत्सलत्वा-**
**निष्कुञ्चष्केशमीशस्स भवतु भवतां भूतये हन्त बाणः॥**

बाणः बाणासुरः भवतां युष्माकं भूतये ऐश्वर्याय भवतु ॥ ससारेण साकं कुटुम्बेन सहैव इन्दुमौलिः सदाशिवः यस्य बाणस्य द्वारे निवसति निवासं करोति। यं बाणं त्रातुं रक्षितुम्। अम्बिका बाणजननी कोटरा। त्यक्ता विसृष्टा ह्रीः यया सा तथोक्तता सती परपुरुषप्रभायां कदनरङ्गे बहुपरपुरुषसन्निधौ कोटवी नग्निका अभूत् युद्धरङ्गे कोटरा नग्ना सती अभिमुखीभूय श्रीकृष्णं पराङ्मुखं कृत्वा पुत्रं ररक्षेति भावः॥ स्त्रीनग्निका कोटवीत्यमरः कृष्णेन वासुदेवेन छिन्नाः नाशिता दोषाः पापानि यस्य तं तथोक्तम्। यं बाणं तनयं तनूजातमिव समालिङ्ग्य। अत्र परीरभ्येति पाठोऽसाधुः। उपसर्गस्य दीर्घाऽप्रसक्तेः। वत्सलत्वात् प्रेम्णा ईशः सदाशिवः यं बाणं निष्क्लेशं दुःखरहितं चक्रे अकरोत्। श्रीकृष्णबाणाऽऽहतिखिन्नं बाणासुरं सदाशिवो वात्सल्येन समालिङ्ग्य तत्खेदमपनुनोदेति भावः। सः ईशानुग्रहपात्रं बाणः बाणासुरः भवतां युष्माकं भूतये भवतु ऐश्वर्यप्रदो भवत्वित्यर्थः। शिवकेशवयोरुभयोरनुग्रहपात्रं बाणः अस्माकं भूतिप्रदाता भवितु महत्येव॥

श्रीमद्भागवते दशमस्कन्धे अध्यायः ६२—बाणः पुत्रशत-ज्येष्ठो बलेरासन्महात्मनः। सहस्रबाहुर्वाद्येन ताण्डवेऽतोषयन्मृडम्॥ भगवान् सर्वभूतेशः शरण्यो भक्तवत्सलः। वरेण छन्दयामास सतं वव्रे पुराधिपम्॥ मोहयित्वा च गिरिशं जृम्भणाऽस्त्रेण जृम्भितम्। बाणस्य पृतनां शौरिर्जघानाऽसिगदेषुभिः॥ धनूंष्याकृष्य युगपद्बाणः

पञ्चशतानि वै। एकैकस्मिन् शरौ द्वौ द्वौ सन्दधे रणकोविदः॥ तानि चिच्छेद भगवान् धनूषि युगपद्धरिः। सारथिं रथमश्वांश्च हत्वा शङ्खमपूरयत्। तन्माता कोटरा नाम नग्ना मुक्तशिरोरुहा॥ पुरोऽवतस्थे कृष्णस्य पुत्रप्राणरिरक्षया। चिच्छेद भगवान् बाहून् शाखा इव वनस्पतेः॥ बाहुषु च्छिद्यमानेषु बाणस्य भगवान् भवः। भक्तानुकम्प्युपव्रज्य चक्रायुधमभाषत॥ अयं ममेष्टो दयितोऽनुवर्ती मयाऽभयं दत्तममुष्य देव। सम्पाद्यतां तद्भवतः प्रसादो यथाहि दैत्यपतौ प्रसादः॥ (प्रह्लादमिवामुं रक्ष) श्रीभगवानुवाच—चत्वारोऽस्य भुजाः शिष्टा भविष्यत्यजराऽमरः। पार्षदमुख्यो भवतो नकुतश्चिद्भयोऽसुरः॥ प्राद्युम्नि रथमारोप्य स बध्वा त मुपानयत्॥

सर्वद्वारावरोधस्थिरहृदयसमारूढचन्द्रावतंसः
श्रीमत्पादारविन्दद्वयभजनपराभूतबाह्यप्रपञ्चः।
शम्भोस्सेवाफलार्थं प्रणतजनकराऽऽस्फालनाबोध्यमानो
भक्त्या पुत्राधिकत्वं दधदिह शिवयोः पातु चण्डः प्रचण्डः॥

चण्डः चण्डेश्वरः युष्मानिति शेषः। पातु रक्षतात्॥ सर्वेषां द्वाराणां नासिकारन्ध्रवदनादीनाम् अवरोधात् निरोधात् स्थिरं निश्चलं यद्हृदयं निर्विकल्पसमाधिनिरूढं चित्तं तस्मिन् समारूढः अधिष्ठितो यः चन्द्राऽवतंसः सदाशिवः तस्य श्रीमत् मोक्षश्रीयुक्तं यत्पादारविन्दद्वयं पदपङ्कजद्वितयं तस्य भजनेन सेवया पराभूतः तिरस्कृतः बाह्यप्रपञ्चः विषयप्रपञ्चो येन स तथोक्तः।

शम्भोः सदाशिवस्य सेवा भजनमेव फलं तस्मै तत्प्राप्तये "चतुर्थी तदर्थे" त्यादिना समासः। प्रणता नम्रा ये जनाः भक्तास्तेषामास्फालनानि करतालास्तैः करतलध्वनिभिः आबोध्यमानः निवेद्यमानः। भक्त्या शिवयोर्गौरीशङ्करयोः। पुमांस्त्रियेत्येकशेषः। पुत्राभ्यां गजमुखषण्मुखाभ्यामधिकत्वम् अतिशययवात्सल्यपात्रतां दधत् वहन्। "नाभ्यस्ताच्छतु"रिति नुमभावः। प्रचण्डः तीव्रः सः शिवयोगी चण्डः चण्डेश्वरः युष्मान् पातु रक्षतात्। चण्डस्य सकललोकप्रसिद्धो बाधिर्यदोषो निर्विकल्पसमाधिरूपमहागुणत्वेन प्रकटित इत्यहो अस्य कवेः प्रौढोक्तिमहिमा॥

**देवं शम्भुं विनैकं तदितरपदयोरानतिं नाचरेयं**
**प्रादक्षिण्यक्रमं वे त्यवितथशपथो वीक्षितुं तत्परीक्षाम्।**
**एकीभूतेऽम्बयाऽस्मिन् सपदि सुषिरयन् भृङ्गभूतोऽङ्गसन्धि**
**योऽभूत्सत्यप्रतिज्ञः स शिवपदरतो मङ्गलायास्तु भृङ्गी॥**

भृङ्गी भृङ्गीश्वरः युष्माकमिति शेषः। मङ्गलाय कल्याणाय अस्तु भूयात्॥ देवं स्वप्रकाशम्। एकम् अद्वितीयं शम्भुं सदाशिवं विना तस्माच्छम्भोरितरस्य अन्यस्य पदयोः पादयोः आनतिं नमस्कारम्। प्रदक्षिणमेव प्रादक्षिण्यम्। ब्राह्मणादित्वात् स्वार्थेष्यञ् प्रदक्षिणं तस्य तत्र वा क्रमं पादविक्षेपं वा नाऽचरेयम् न कुर्याम् इति एवमवितथः सत्यः शपथः प्रतिज्ञा यस्य स तथोक्तः। आसीदिति शेषः। तस्य शपथस्य परीक्षां दार्ढ्यशोधनम् वीक्षितुं द्रष्टुं कर्तुमित्यर्थः।

अस्मिन् सदाशिवे अम्बया पार्वत्या एकीभूते एकत्वं प्राप्ते सति अर्धनारीश्वरत्वं प्राप्ते सतीत्यर्थः। सपदि तत्क्षणमेव भृङ्गीभूतः भ्रमररूपधारी सन् अङ्गयोः पार्वतीपरमेश्वरार्धशरीरयोः सन्धिः संश्लेषः तं सुषिरयन् सच्छिद्रं कुर्वन्। "तत्करोति तदाचष्ट" इति णिजन्तात्कर्तरि शता। यः भृङ्गी सत्यप्रतिज्ञः सत्यसन्धः। "सन्धा प्रतिज्ञा मर्यादे"त्यमरः। अभूत् सः शिवपदैकरतो भृङ्गी भृङ्गीश्वरः युष्माकं मङ्गलाय कल्याणायाऽस्तु।

कालिकापुराणे अध्यायः ४७—अग्नावुत्सृज्यमानस्य तेजसश्शशभृद्भृतः। अणुद्वयमतिस्वल्पं गिरिप्रस्थे पपातह॥ तयोः कारणयोः सद्यस्सम्भूतौ शङ्करात्मजौ। एको भृङ्गसमः कृष्णो भिन्नाञ्जननिभोऽपरः॥ भृङ्गी तस्य तदा ब्रह्मा नाम भृङ्गीति चाकरोत्। महाकृष्णैकरूपस्य महाकालेति चाकरोत्॥

भस्म स्वच्छत्रिपुण्ड्रा ज्वलदनलदृशो मेचका नीलकाया
विद्युद्विद्योतमानप्रचलघनबलाकाऽऽवलीकाऽम्बुदाभाः।
रूक्षा रुद्राक्षभूषाः प्रहरणनिवहोद्दण्डदोर्दण्डभाज-
श्चण्डाश्चण्डेश्वराद्याः प्रमथगणगणाः पान्तु वः सान्त्ववादैः॥

सदाशिवपरिवारस्यानन्तत्वात् प्रमथगणगणत्वेन सर्वान् स्तौति-भस्मेत्यादि॥ प्रमथगणगणाः प्रमथगणनामकशैवगणानां समूहाः सान्त्ववादैः अत्यन्तमधुरोक्तिभिः वः युष्मान् पान्तु रक्षन्तु॥

भस्मनः विभूतेः स्वच्छानि त्रिपुण्ड्राणि फालभागरचितरेखा-त्रयं येषां ते तथोक्ताः। ज्वलन् दीप्यमानो यः अनलः अग्निः स इव दृक् दृष्टिः नेत्राणि वा येषां ते तथोक्ताः। मेचका नीलवर्णाः नीचकायाः ह्रस्वदेहाः। "वामनेन्यङ् नीच खर्व ह्रस्वा" इत्यमरः। विद्युद्भिः विद्योतमानाः प्रकाशमानाः प्रचलाः चञ्चलाः घनः महा-न्तश्च बलाकानां पक्षिविशेषाणाम्। "बलाका बिसकण्टिके" इत्यमरः। आवल्यः पङ्क्तयो येषां ते च ते अम्बुदाः मेघाः। अम्बु ददतीति अम्बुदाः। "आतोऽनुपसर्गे कः" इति कः। तेषामामेव आभा कान्तिर्येषां ते तथोक्ताः। पदगतनिदर्शना। दृग्विद्युतोर्मेचक-कायाम्बुदयोस्त्रिपुण्ड्रबलाकावल्या रत्यन्तं समुचितं सादृश्यम्। रूक्षास्तीक्ष्णाः रुद्राक्षा एव भूषाः अलङ्कारा येषां ते तथोक्ताः। प्रहरणानामायुधानाम्। "आयुधं तु प्रहरणम्" इत्यमरः। निवहैः समूहैः उद्दण्डाः श्रेष्ठा ये दोष एव दण्डाः। "भुजबाहू प्रवेष्टो दो" रित्यमरः। तान् भजन्तीति तथोक्ताः। "अन्येभ्योऽपि दृश्यन्ते" इति भजेर्ण्विः। चण्डाः तीव्राः अत्यन्तकोपनाः चण्डेश्वर आदिर्येषां ते तथोक्ताः। प्रमथगणगणाः प्रमथगणानां समूहाः सान्त्वादैः अत्य-न्तमधुरोक्तिभिः। "अत्यन्तमधुरं सान्त्वम्" इत्यमरः। वः युष्मान् पान्तु रक्षन्तु। भक्तेषु प्रमथा अक्रूरा एव॥

कालिकापुराणे अध्यायः २९—षट्त्रिंशत्तु सहस्राणि प्रमथा द्विजसत्तमाः। तत्रैकत्र सहस्राणि भागे षोडश संस्थिताः॥

नानारूपधरा ये वै जटाचन्द्रार्धमण्डिताः । ते षोडश समाख्याताः कोटयो ये धृतव्रताः ॥ अपरे कामिनः शम्भोस्सुनर्मसचिवाः स्मृताः । विचित्ररूपाभरणा गणास्तु प्रमथाः स्मृताः ॥ प्रमथ्नन्ति च युद्धेषु युध्यमानान् महाबलान् । न सदा क्रूरकर्माणि ते कुर्वन्ति महौजसः ॥ दृष्टिमात्रस्य ते क्रूरः क्रूराऽक्रूराश्च कार्यतः ॥

**अत्यन्त प्रेमनृत्यत्प्रमथगणगणप्रस्तुतस्तोत्रभङ्गी-**
**घोषोद्भूत प्रतिश्रुद्भरभरितदरी पावनोपत्यको वः ।**
**माद्यद्गन्धर्व विद्याधर सुरयुवतीगीतशैवापदान-**
**श्रुत्युद्यत्प्रीति बाष्पाऽऽकुलमुनिनिबिडः पातु कैलासशैलः ॥**

सदाशिवाऽऽवासस्थानं प्रस्तौति - कैलासशैलः वः युष्मान् पातु रक्षतु ॥ अत्यन्तेन अत्यधिकेन प्रेम्णा भक्त्या नृत्यन्तो ये प्रमथगणगणाः तैः प्रस्तुता आरब्धा या स्तोत्रस्य भङ्गी प्रकारः तस्य घोषः ध्वनिः तेनोद्भूतः जातो यः प्रतिश्रुत् प्रतिध्वनिः प्रतिश्रुत्प्रतिध्वान इत्यमरः । तस्य भरः अतिशयः तेन भरिताः पूर्णाश्च ता दर्यः कन्दराः । "दरी तु कन्दरो वास्त्री" इत्यमरः । ताभिः पावनाः उपत्यकाः पर्वतसमीपभूमयो यस्य स तथोक्तः । "उपत्यकाऽद्रेरासन्ना भूमि"रित्यमरः । माद्यन्त्यः तुष्यन्त्यः । मदी हर्षे इति दैवादिकाच्छत्रन्तः, "शमामष्टानां"मिति दीर्घः । याः गन्धर्वाणां विद्याधराणां देवयोनिविशेषाणां सुराणां देवानां युवत्यः कामिन्यः । "यु मिश्रणे ऽमिश्रणे चे"त्यादादिकाच्छतरि "ऋन्नेभ्यः" इति ङीप् ।

ताभिः गीतानि यानि शैवापदानानि सदाशिवपूर्वचरितानि। "अपदानं पूर्ववृत्त"मित्यमरः। तेषां श्रुत्या श्रवणेन उद्यन्ति प्रादुर्भवन्ति यानि बाष्पाणि आनन्दाऽश्रूणि तैराकुलाश्च ते मुनयः तैः निबिडः सान्द्रः ससम्बाधः कैलासः सदाशिवगिरिः वः युष्मान् पातु रक्षतु॥

श्रीमद्भागवते स्कं ४ अध्यायः ६—स (ब्रह्मा) इत्थमादिश्य सुरानज स्तैः समन्वितः पितृभिः प्रजेशैः॥ ययौ स्वधिष्ण्यान्निलयं पुरद्विषः कैलासमद्रिप्रवरं प्रियं प्रभोः॥ जुष्टं किन्नरगन्धर्वैरप्सरोभिर्वृतं सदा॥

**मार्कण्डेयावनार्थं चलितकरवलत्पाशकीनाशदेव-**
**व्यूढोरःपीठ गाढद्रुतरुधिरवसापङ्क सङ्क्रान्तवर्चाः।**
**अर्चिः खद्योतितद्योमणिरहितशिरःशूलसन्धानशीलः**
**शूलः शैलेन्द्रकन्यापतिकरचलितः शिक्षये द्वो विपक्षान्॥**

सदाशिवमुख्याऽऽयुधं प्रस्तौति—शूलः त्रिशूलायुधम् वः युष्माकं विपक्षान् शत्रून् शिक्षयेत् शास्तु॥ मृकण्डोपरत्यं पुमान् मार्कण्डेयः। "शुभ्रादिभ्यश्चे"ति ढक्। "ढेलोपोऽकद्र्वा" इत्युकारलोपः। तस्य अवनार्थं रक्षणार्थं चलितो यः करः हस्तः तस्मिन् वलन् चलन् यः पाशः पाशायुधं यस्य स चासौ कीनाशदेवः यमदेवः। "कृतान्ते पुंसि कीनाश" इत्यमरः। तस्य व्यूढं विपुलं य दुरः वक्ष एव पीठम्। "व्यूढस्तु पृथुले त्रि"ष्विति त्रिकाण्डी-

शेष:। तस्माद्गाढम् अधिकं यथा तथा द्रुते प्रसृते रुधिरं रक्तं वसा मेद:। "मेदस्तु वपा वसे"त्यमर:। एते एव पङ्कं जम्बाल: तेन सङ्क्रान्तं लिप्तं वर्च: कान्ति: यस्य स तथोक्त:। अर्चिषा स्वकान्त्या खद्योतित: ज्योतिरिङ्गणवदाचरित:। "खद्योतोज्योरिङ्गण" इत्यमर:। खद्योतशब्दा "त्सर्वप्रातिपदिकेभ्य: क्विब्वाक्तव्य" इत्याचारक्विबन्तात् क्त:। द्योमणि: सूर्य: येन स तथोक्त:। सूर्यकान्त्यतिशायिकान्तिमानिति भाव:। अहितानां शत्रूणां शिरसां शूलस्य बाधायास्सन्धानं घटनं शीलं स्वभावो यस्य स तथोक्त:। शत्रुबाधाकर इति भाव:। शैलेन्द्रकन्याया: पार्वत्या: पति: भर्ता सदाशिव: तस्य करे बाहौ चलित: चलनं प्राप्नुवन्। आदिकर्मणि क्त:। यद्वा करेण चलित: चालित:। अन्तर्भावितप्रेरणार्थोऽत्र चाल:। शूल. शूलायुधं व: युष्माकं विपक्षान् शत्रून्। "विपक्षाऽहिताऽमित्र दस्यु शास्त्रवशत्रव" इत्यमर:। शिक्षयेत् शास्तु।

पाद्मे ५ खण्डे अध्याय: ३०—मार्कण्डेयेन मुनिना यथा मृत्यु: पराहित:। तथा हिकथयिष्यामि श्रृणु वत्स महामुने॥ भृगो: पुत्रो महाभागो बालत्वे च महाद्युति:। ववृधे वल्लभो बाल: पिता तस्य कृतक्रिय:॥ स तस्मिञ्जातमात्रे तु आदेशी कश्चिदब्रवीत्। वर्षे द्वादशमे पूर्णे मृत्युरस्य भविष्यति॥ श्रुत्वा तन्मातापितरौ दु:खितौ तौ बभूवतु:। तच्छुत्वा तौ मुनि: प्राह मातरं पितरं तदा॥ यथाचाऽऽहं चिरायु: स्यां तथा कुर्यामहं तप:॥

सप्ताऽकूपारपारीवलयित सुमहाचक्रवालाऽद्रिचक्रा-
क्रान्ति प्रेङ्खन्मयूख प्रकरकवलिताशेषलोकान्धकारः।
राजा सर्वग्रहाणां रजनिजनिभयोद्वेजि राजीवराजी-
जीवातुः पातु पूषा वपुषि परिगताशेषदोषप्रमोषी ॥ ३५ ॥

स्वकिरणप्रसरणेन शुभाशुभफलानि प्रजाभ्यः प्रददति सूर्या-दयो ग्रहाः। उपरागादौ तत्सर्वानुभवसिद्धम्। अतो मूर्तित्रय प्रस्तावानन्तरं ग्रहराजमारभ्य क्रमशस्तान् प्रस्तौति—सप्ताकूपारे-त्यादि। पूषा सूर्य। युष्मानिति शेषः। पातु रक्षतु।

सप्तभि रकूपारैः समुद्रैः। "समुद्रोऽब्धिरकूपार" इत्यमरः। तैः पारीवलयितः परित आवृतः। उत्तरपदस्य घञन्तत्वाभावादुप सर्गेकारस्य दीर्घश्चिन्त्यः। यद्वा सप्तभिरकूपारैरेव पारीभि पात्रैः (शर) वलयितो यश्चक्रवालाद्रिः लोका लोकापरनामा परिधिपर्वतः। "लोकालोकश्चक्रवाल" इत्यमरः। स एव चक्र तस्य आक्रान्त्या एकदेशाक्रमणेनेत्यर्थः। प्रेङ्खन्तः नृत्यन्तश्च ते मयूखाः किरणाः तेषां प्रकरः समूहः, तेन कवलितः ग्रस्तः अशेषाणां समस्तानां लोकानां भुवनानामन्धकारः तमो येन सः तथोक्तः। सर्वे ये ग्रहाः ते तथोक्ताः तेषां चन्द्रादीनां ग्रहाणां राजा प्रभुः "विभावसुर्ग्रह-पति"रित्यमरः। रजन्याः रात्र्याः जनिः उत्पत्तिः यस्य तच्च तद्भयं तेन उद्वेजीनि अस्वस्थचित्तानि तानि च तानि राजीवानि पद्मानि तेषां राजी समूहः तस्य जीवातुः जीवनौषधम्। "जीवातुर्जीवनौ-

षधम्" इत्यमः। वपुषि देहे परिगतान् व्याप्तान् अशेषान् समस्तान् दोषान् पापानि व्यर्धींश्च। "आरोग्यं भास्करादिच्छे"दित्युक्तेः। तान् प्रमोषितुं शीलमस्येति तथोक्तः। पूषा सूर्यः वः युष्मान् पातुरक्षतु ॥

मान्याऽश्विन्यादितारानवनव युवतीनैकसम्भोगभङ्गी-
वैचित्र्यानन्दभेदानुभवरसिकताधन्य मूर्धन्यमान्यः।
साचिव्यं मन्मथस्य त्रिभुवनजयिनः स्वैः करैरेव कुर्वन्
शर्वस्याष्टाङ्गमूर्तिः शिशिरयतु स वः शर्वरीसार्वभौमः ॥

शर्वर्याः रात्र्याः सार्वभौमः चक्रवर्ती चन्द्रः वः युष्मान् शिशिरयतु निस्तापान् करोतु ॥ मान्याः पूजनीयाः अश्विनी आदिर्यासां ताः तारा: नक्षत्राणि ता एव नवनवाः नित्यनूतनाः युवत्यः युवतयः तासां नैकाः बहवः। नञर्थेन नशब्देन सुप्सुपेति समासः। सम्भोगानां रतीनां याः भङ्ग्यः प्रकारास्तासां यद्वैचित्र्यं विलक्षणता तेन ये आनन्दभेदाः विभिन्नाऽऽनन्दाः तेषामनुभवे या रसिकता रसग्रहणपारीणता। "अत इनि ठनौ"विति मत्वर्थे ठन्, भावे तल्। तया धन्यानां कृतकृत्यानां ये मूर्धन्याः श्रेष्ठाः तैर्मान्यः पूजनीयः बहुविधसुरताऽनुभूतिमदग्रेसर इति भावः। त्रयाणां भुवनानां समाहारास्त्रिभुवनं स्वर्गमर्त्यपाताललोकत्रयम्। पात्राद्यन्तत्वान्नस्त्रीत्वम् अतो न ङीप्। तस्य जयः अस्यास्तीति तथोक्तः त्रैलोक्यैकवीरः तस्य मन्मथस्य साचिव्यं मन्त्रित्वम्। "गुणवचनब्राह्मणादिभ्यः

कर्मणि चे''ति भावे ष्यञ् । स्वैः निजैः करैः किरणैरेव हस्तैः । श्लिष्टरूपकम् । कुर्वन् मन्मथस्य त्रिलोकविजय एतत्साहाय्याऽधीन इति त्रिलोकविजयिना मन्मथादपि महत्त्वमस्य व्यज्यते । शर्वस्य सदाशिवस्य अष्टांश अष्टमांशभूता मूर्तिः स्वरूपं यस्य स तथोक्तः । संख्यावाचकानां वृत्तिविषये पूरणार्थकत्वं यथा त्रिदिवः त्रिभाग इत्यादि । सः एवं प्रसिद्धः शर्वरी रात्रि । शृहिंसायामित्यस्मात् "अन्येभ्योऽपि दृश्यन्त" इति वनिपि गुणे "वनोरचे''ति ङीब्रेफादेशौ । तस्याः सार्वभौमः चक्रवर्ती चन्द्रः वः पातु रक्षतु । रसिकेत्यत्र यद्यपि "रसादिभ्यश्चे''ति मतुपैव भाव्यम्; तथापि गुणादिति गणसूत्रेण केवलगुणवाचभ्य एव केवलो मतुप । जलादिवाचकेभ्यस्तु इनिठनावपि भवत एव । रसशब्दस्य जलादीनामपि वाचकत्वाद्रनपि भवति । वस्तुतस्तु एभ्यः इनि ठनावपीष्येते इतीदं सूत्रं महाभाष्यकारेण प्रत्याख्यातम् । शिवपुराणे शतरुद्रीये अध्यायः—२.

भूम्यम्भोऽग्निमरुद्व्योमक्षेत्रज्ञार्कनिशाकराः । अधिष्ठिताश्च शर्वाद्यैरष्टरूपैः शिवस्य हि ॥ शर्वो भवस्तथा रुद्रः उग्रोभीमः पशोः पतिः । ईशानश्च महादेवो मूर्तयश्चाष्ट विश्रुताः ॥ स्कान्दे आवन्त्यण्डेऽरुणाचलमाहात्म्ये अध्यायः २७ — सप्तविंशतिं सोमाय दाक्षायणीर्महाव्रताः । पत्नीः प्राचेतसो दक्षो ददौ नक्षत्रसंज्ञिकाः ॥

वर्षाकालीनवर्षोन्मुखनिखिलदि गुद्भूतजीमूतजाल-
प्रोत्साहोत्साहवल्गद्धनमुसलगदाभीमहस्तैस्समस्तैः ।
करैश्चात्यन्तसख्यैस्सततमभिगत. किङ्कराणां सहस्रैः
शत्रूणां सप्तमस्थः स भवतु भवतां मङ्गलो मङ्गलाय ॥३७॥

मङ्गलः कुजः भवतां युष्माकं मङ्गलाय कल्याणाय भवतु ॥

वर्षाकालीनाः वर्षाकाले भवाः । प्रयोगोऽयं चिन्त्यः । वर्षस्य उन्मुखाः अभिमुखः निखिलदिगुद्भूताः सकलदिशोत्पन्नाः सकल-दिशाव्याप्ताः ये मेघाः तेषां जाल समूहः । "जालं समूह" इत्यमरः । तस्य प्रोत्साहः उद्यमइव उद्यमः उत्साहः व्यवसाय व्यवसायश्च ताभ्यां वल्गन्ति चलन्ति मुसलानि गदाः आयुधविशेषाः ताभिर्भी-माः भयङ्कराः हस्ता येषां ते तथोक्ताः । समस्तैरशेषैः करैर्दारुणैः अत्यन्तसख्यैः परस्परं निरतिशमैत्रीयुतैः किङ्कराणां सेवकानां सहस्रैः सततं सर्वदा अभिगतः परिवृतः मङ्गलः कुजः भवतां युष्माकं शत्रूणां शात्रवानणां सप्तमस्थः जन्मलग्नाद्वाचारलग्नाद्वा सप्तमस्थानस्थितः सप्तमस्थानस्थिति फलप्रद इत्यर्थः । "मृतदारो रोगार्तोऽमार्गरतो भवति दुःखितः पापः । श्रीरहितः सन्तप्तः शुष्कतनुर्भवति पुमान् शोकसन्तप्त" ॥ इत्यादिवचनैः बहनर्थकर इति यावत् । भवतु । भवतामिति मध्यमणिन्यायेनोभयत्रान्वेति । भवतां युष्माकन्तु मङ्ग-लाय कल्याणाय भवतु ॥

साम्यं रेतोधसा यो भजति तनुरुचा क्षेत्रिणा तुल्यबुद्धिः
कन्यायुग्माभिलाषी तदपि बुध इति प्राप यः पुण्यकीर्तिम् ।
सोऽयं निर्मातु सायंसमयपरिदलन्मालतीजालतीव्राऽऽ
मोदं वादं मतिं वोऽपि च सकलकलाऽऽरोहिणीं रौहिणेयः ॥

साम्यमिति ॥ रौहिणेयः बुधः वादं शास्त्रवादं सभाऽऽकर्षकवाग्जालं वा सकलकलाऽऽरोहिणीं चतुष्षष्टिकलानिरूढां मतिं बुद्धिं वः युष्माकं निर्मातु करोतु ददात्वित्यर्थः ॥ यः बुधः रेतः तेजो धीयते निक्षिप्यतेऽनेनेति रेतोधाः गुरुक्षेत्रे तारायां बीजावापकश्चन्द्रः तेन तनुरुचा देहकान्त्या साम्यं सादृश्यं भजति प्राप्नोति, क्षेत्रिणा क्षेत्रभूततारापतिना बृहस्पतिना तुल्या समा बुद्धिर्यस्य स तथोक्तः । कन्यायुग्मं युवतीद्वयं कन्यामिथुनराशी इत्यर्थान्तरम् । अभिलषितुं काङ्क्षितुं शीलं यस्येति तथोक्तः । अनेकस्त्रीकामुकोऽपि बुधः विद्वान् बुधनामक इत्यर्थान्तरम् । इति एतादृशीं पुण्या पावना चासौ कीर्तिर्यशः तां प्राप । विरोधाभासः । सोऽयं रौहिणेयः "पत्न्यः पितुर्मातर एव सर्वाः" इति न्यायेन बुधस्य रोहिणी जननीति ध्येयम् ॥ "शुभ्रादिभ्य" इति ढक् । रोहिणीपुत्रः बुधः सायंसमये सायङ्काले परिदलन्ति विकसन्ति मालत्याः लताविशेषस्य जालानि मुकुलानि तेषां तीव्रः अत्यधिकः आमोदः अतिनिर्हारी परिमलः । "आमोदस्सोऽतिनिर्हारी"त्यमरः । सर्वजनहृदयङ्गम इत्यर्थः । यस्य चासौ वादः शास्त्रार्थवादः सभाकर्षकवाग्जालं वा तं सकलाश्च ताः

कलाः चतुष्षष्टिकलाः ता आरोढुं शीलमस्या इति तथोक्ता तां चतुष्षष्टिकलानिरूढां मतिं च बुद्धिं निर्मातु करोतु ददात्वित्यर्थः। वादं सर्वजनहृदयङ्गमं मतिं चतुष्षष्टिकलानिरूढां करोत्विति वा ॥

त्रासस्थानाऽवलीढत्रिदशपरिवृढस्वर्गसाम्राज्य लक्ष्मी-
निष्प्रत्यूहानुभूतिप्रतिदिनविधृतप्रातिभाव्यप्रयासः।
यो बार्हस्पत्यनीतिप्रणयनचतुरोयोऽङ्गिरोभाग्यराशि-
र्धीवैशद्यं स दद्याद्वचसि च पटुतां लौकिके वैदिके च ॥ ३९ ॥

त्रासस्थानेत्यादि। सः बृहस्पतिः युष्मभ्यमिति शेषः। धीवैशद्यं बुद्धेः स्वच्छत्वं लौकिके लोकसम्बन्धिनि वैदिके वेदसम्बन्धिनि च वचसि पटुतां सामर्थ्यं दद्यात् यच्छतु ॥

त्रासस्य भयस्य स्थानानि आवासाः राक्षसा इत्यर्थः तैरवलीढा आक्रान्ता या स्वर्गराज्यलक्ष्मीः तस्याः प्रत्यूहेभ्यो निष्क्रान्ता निष्प्रत्यूहा निर्विघ्ना चासौ अनुभूतिः अनुभवः तत्र दिने दिने प्रतिदिनम्। "अव्ययं विभक्ती"त्यादिना यथार्थे वीप्सायामव्ययीभावः। विधृतः विशेषेण स्वीकृतः यः प्रतिभूः प्रतिनिधिः तस्य भावः प्रातिभाव्यम्। ब्राह्मणादित्वात् ष्यञ्। तेन प्रतिनिधित्वेन यः प्रयासः आयासो येन स तथोक्तः। यो बृहस्पतिना प्रोक्ता बार्हस्पत्या। "दित्यदित्यादित्ये"त्यादिना ण्यः। सा चासौ नीतिः नीतिशास्त्रं तस्याः प्रणयनं रचनं तत्र चतुरः कुशलः यः अङ्गिरसः अङ्गिरोमहर्षेः भाग्यानां पुण्यानां राशिः सञ्चयः बहुजन्मसुकृतैः पुत्रत्वेन जात इति भावः। सः बृहस्प-

तिर्गुरुः युष्मभ्यमिति शेषः। धियो बुद्धेः वैशद्यं स्वच्छतां सूक्ष्मग्राहितां सन्मार्गैकनिरतत्वं वा। लौकिके लोकसम्बन्धिनि, वैदिके वेदसम्बन्धिनि च वचसि वाचि पटुतां सामर्थ्यं दद्यात् यच्छतु। वचसां लौकिकत्ववैदिकत्वे महाभाष्ये प्रसिद्धे। तथाहि—"अथ शब्दानुशासनम्। केषां शब्दानाम्? लौकिकानां वैदिकानां चे"ति॥ गारुडे आचारकाण्डे अध्यायः ११० बार्हस्पत्यनीतिः—

वरयेत्कुलजां प्राज्ञो विरूपामपि कन्यकाम्। सुरूपां सुनितम्बाञ्च नाकुलीनां कदाचन॥ विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम्। नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि॥ स्थानेष्वेव प्रयोक्तव्या भृत्याश्चाऽऽचरणानि च। न हि चूडामणिः पादे शोभते वै कदाचन॥ कुसुमस्तबकस्येव द्वे गती तु मनस्विनः। मूर्ध्नि वा सर्वलोकानां शीर्यतः पतितो वने॥ उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत्। पादलग्नं करस्थेन कण्टकेनैव कण्टकम्। धनप्रयोगकार्येषु तथा विद्यागमेषु च। आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत्॥ धनिनः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः। पञ्च यत्र न विद्यन्ते न कुर्यात् तत्र संस्थितिम्।

न सर्ववित्कश्चिदिहाऽस्ति लोके नात्यन्तमूर्खो भुवि चापि कश्चित्। ज्ञानेन नीचोत्तममध्यमेन योऽयं विजानाति स तेन विद्वान्॥ अध्यायः १११. नोधश्छिन्द्यात्तु यो धेन्वा क्षीरार्थी लभते

भयः । एवं राष्ट्रं प्रयोगेण पीड्यमानं न वर्धते ॥ मातृवत्परदारेषु परद्रव्येषु लोष्ठवत् । आत्मवत् सर्वभूतेषु यः पश्यति स पश्यति ॥

**नित्यं दैत्येन्द्रसेनाजयकरमृतसञ्जीवनीदिव्यमन्त्र-**
**च्छात्रीभावाऽभिलाषि त्रिदशगुरुसुतप्रापितानुग्रहो यः ।**
**नीतौ यश्चौशनस्यां प्रकटितकपटोपायतन्त्रप्रकारः**
**काव्यो वो भव्यकाव्यप्रणयनचतुरां सोऽद्य बुद्धिं विदध्यात् ॥**

नित्यमिति ॥ काव्यः शुक्रः भव्यानि शुभप्रदानि यानि काव्यानि तेषां प्रणयनं रचनं तत्र चतुरां कुशलां बुद्धिं निश्चयात्मिकां विदध्यात् कुर्यात् ॥

नित्यं सर्वदा दैत्येन्द्राणां राक्षसचक्रवर्तिनां या सेना तस्या जयकरः जयसम्पादको यः मृतसञ्जीवनीदिव्यमन्त्रः । मृतानां सञ्जीवनी प्राणदात्री तन्नामको दिव्यमन्त्रः न तु क्षुद्रः । तत्सम्बन्धी श्छात्रीयभावः शिष्यत्वं त मभिलषितुं शीलं यस्य स चासौ, तिस्रः उत्पत्तिस्थितिनाशात्मिकास्तिस्र एव वा दशा बाल्यकौमारयौवनानि वा येषां ते त्रिदशाः देवाः त्रिदशपरिमाणं वयो येषां त इति वा । तेषां गुरोः बृहस्पतेः सुतः तनयः कचाख्यः तस्मिन् तं वा प्रापितः गमितः अनुग्रहो येन स तथोक्तः । किञ्च उशनसा शुक्रेण प्रोक्ता औशनसी । "तेन प्रोक्त"मित्यण् । "टिड्ढे" त्यादिना ङीप् । तस्यां नीतौ नीतिशास्त्रे प्रकटिताः स्पष्टं प्रतिपादिताः कपटाः कूटाः

उपाया यस्मिंस्तच्च तत्तन्त्रं सिद्धान्तः "तन्त्रं प्रधाने सिद्धान्त" इत्यमरः। तस्य प्रकाराः भेदाः येन स तथोक्तः। कवेरपत्यं काव्यः। "ओरावश्यक" इति ण्यत्। "कुर्वादिभ्यो ण्य" इति ण्यो वा। शुक्रः वः युष्माकं भव्यानि शुभप्रदानि यानि काव्यानि ग्रन्थाः। "काव्यं ग्रन्थे पुमान् शुक्र" इति निघण्टुः। कविकर्म काव्यम्। ब्राह्मणादित्वात् कर्मणि ष्यञ्। तेषां प्रणयने निर्माणे चतुरां कुशलां बुद्धिं निश्चयात्मिकां धियं विदध्यात् करोतु ददात्वित्यर्थः बुद्धिं चतुरां करोत्विति वा॥

महाभारते सम्भवपर्वणि अध्यायः ८६. देवा ऊचुः—या सा विद्या निवसति ब्राह्मणेऽमिततेजसि। शुक्रे तामाहर क्षिप्रं भागभाङ्नो भविष्यसि॥ तथेत्युक्त्वा ततः प्रायात् बृहस्पतिसुतः कचः। असुरेन्द्रपुरे शुक्रं दृष्ट्वा वाक्यमुवाच ह॥ नाम्ना कच इति ख्यातं शिष्यं गृह्णातुमां गुरो॥ कच सुस्वागतं तेऽस्तु प्रतिगृह्णामि ते वचः। वनं ययौ कचो विप्रो ददृशुर्दानवाश्च ते। ततस्तृतीय हत्वा तु दग्ध्वा कृत्वा च चूर्णशः॥ प्रायच्छन् ब्राह्मणायैव सुरायामसुरास्तथा। स पीडितो देवयान्या महर्षिः समाह्वयत् सम्भ्रमाच्चैव काव्यः। गुरोर्हि भीतो विद्यया चोपहूतः शनैर्वाक्यं जठरे व्याजहार॥ तव प्रसादान्न जहाति मां स्मृतिः स्मरामि सर्वं यच्च यथा च वृत्तम्। असुरैः सुरायां भवतेऽस्मि दत्तः॥ शुक्र उवाच—संसिद्धरूपोऽसि बृहस्पतेः सुत विद्यामिमां

प्राप्नुहि जीवनीं त्वम् । न चेदिन्द्रः कचरूपी त्वमद्य न निवर्तेत्पुनः कश्चिदन्यो ममोदरात् ॥ ब्राह्मणं वर्जयित्वैकं, तस्माद्विद्यामवाप्नुहि । गुरोः सकाशात्समवाप्य विद्यां भित्वा कुक्षिं निश्चक्राम विप्रः ॥

श्रीमद्भागवते स्कं ८ अध्याय: १९. शुक्रनीति:—न तद्दानं प्रशंसन्ति येन वृत्तिर्विपद्यते । दानं यज्ञस्तपः कर्म लोके वृत्तिमतो यतः ॥ धर्माय यशसेऽर्थाय कामाय स्वजनाय च । पञ्चधा विभजन्वित्तमिहामुत्र च मोदते ॥ स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसङ्कटे । गोब्राह्मणार्थे हिंसायां नाऽनृतं स्याज्जुगुप्सितम् ॥

**पीडां राशित्रयस्थो दशरथनृपतेः सार्धसप्ताब्द कालं**
**कुर्वन् यस्सर्वसाधारणमथ रथिना तेन शौर्योद्दुरेण ।**
**सङ्ग्रामे बद्धसख्यो मुदमिह पठतां तत्कृतस्तोत्रमासी-**
**द्भूयाद्वः शात्रवाणां शनिरयमशनिः क्लेशनिर्हारकारी ॥४१॥**

पीडामिति । शनिः शनिग्रहः वः युष्माकं शात्रवाणां शत्रूणाम् अशनिः वज्राऽऽयुधं घातुक इत्यर्थः भूयात् , युष्माकन्तु क्लेशनिर्हारकारी दुःखनाशको भूयात् ।

यः शनिः राशित्रयस्थः व्ययजन्मद्वितीयराशिषु स्थितः सन्, गोचारवशात् । "सुपि स्थ" इति सूत्रे सुपीति योगविभागात्कः । अर्धेन षण्मासरूपेण अर्धभागेन सहितं सार्धं च तत्सप्तानामब्दानां वत्सराणां समाहारः सप्ताब्दं सार्धसप्ताब्दमितश्चासौ कालः तथोक्तः तम् । "कालाध्वनोरत्यन्तसंयोग" इति द्वितीया । दशरथनृपतेः

पीडां बाधां सर्वैः प्राणिभिः साधारणं समानं यथा तथा कुर्वन्। अथ ततः शौर्योध्दुरेण अत्यधिकपराक्रमशालिना तेन दशरथमहाराजेन सङ्ग्रामे युद्धे बद्धं कृतं सख्यं स्नेहो येन स तथोक्तः। "सख्युर्यदि"ति भावे यत्। अभूदिति शेषः। युद्धे जितः तेन राज्ञा कृतस्नेहोऽभूदिति भावः। तेन दशरथमहाराजेन कृतं रचितं यत् स्तोत्रं शनिस्तुतिः तत्पठतां मुदं सन्तोषं सन्तोषदायक मासीत्, सोऽयं शनिः शनिग्रहः वः युष्माकं शात्रवाणां शत्रूणां प्रज्ञादित्वात् स्वार्थेऽण्। अशनिः वज्रं नाशक इत्यर्थः। भूयात्। युष्माकं तु क्लेशान् दुःखानि तेषां निर्हारः निरसनम्। "निर्हारोऽभ्यवकर्षण"मित्यमरः। तं करोतीति तथोक्तः। सुप्यजाताविति णिनिः। सर्वदुःखनाशको भूयादिति भावः।

स्कान्दे प्रभासखण्डे अध्यायः—४९. पद्मपुराणे उत्तरखण्डे स्कान्दे नागरखण्डे अध्यायः ९६. एवमादिषु बहुषु पुराणेष्वेषा गाथा प्रसिद्धा॥

वसिष्ठ उवाच—प्राजापत्यमृक्षमिदं ह्यस्मिन् भिन्ने कुतः प्रजा। अयं योगो ह्यसाध्यस्तु ब्रह्मशक्रादिभिस्तथा॥ महादेव उवाच—

इति सञ्चिन्त्य मनसा साहसं परमं महत्। समादाय धनुर्दिव्यं दिव्यायुधसमन्वितम्॥ रथमारुह्य वेगेन गतो नक्षत्रमण्डलम्। सपादयोजनं लक्षं सूर्यस्योपरि संस्थितम्॥ रोहिणीपृष्ठमास्थाय

राजा दशरथः पुरा । बभ्राज स तदाऽऽकाशे द्वितीय इव भास्करः ॥ आकर्णपूर्णचापे तु संहारास्त्रं न्ययोजयत् । संहारास्त्र शनिर्दृष्ट्वा सुरासुरभयङ्करम् ॥ हसित्वा तद्भयात्सौरिरिदं वचनमब्रवीत् । पौरुषं तव राजेन्द्र परं रिपुभयङ्करम् ॥ तुष्टोऽस्मि तव राजेन्द्र तेजसा पौरुषेण च । वरं ब्रूहि प्रदास्यामि मनसा यत्किमिच्छसि ॥ दशरथ उवाच—रोहिणीं भेदयित्वा तु गन्तव्यं न कदाचन । एवमस्तु शनिः प्राह वरं दत्वा तु शाश्वतम् ॥ पुनरेवाऽब्रवीत्तुष्टो वरं वरय सुव्रत । ध्यात्वा सरस्वतीं देवीं गणनाथं विनायकम् ॥ राजा दशरथः स्तोत्रं सौरेरिदमथाब्रवीत् ।

नमः कृष्णाय नीलाय शितिकण्ठनिभाय च ।
नमः कालाग्निरूपाय कृतान्ताय च वै नमः ॥ १ ॥

नमो निर्मांसदेहाय दीर्घश्मश्रुजटाय च ।
नमो विशालनेत्राय शुष्कोदर भयाऽऽकृते ॥ २ ॥

नमः पुष्कलगात्राय स्थूलरोम्णे च वै नमः ।
नमो दीर्घाय शुष्काय कालदंष्ट्र नमोऽस्तु ते ॥ ३ ॥

नमस्ते कोटररूपाय दुर्निरीक्ष्याय वै नमः ।
नमो घोराय रौद्राय भीषणाय करालिने ॥ ४ ॥

नमस्ते सर्वभक्षाय वलीमुख नमोऽस्तु ते ।
सूर्यपुत्र नमस्तेऽस्तु भास्करेऽभयदाय च ॥ ५ ॥

अधोदृष्टे नमस्तेऽस्तु संवर्तक नमोऽस्तु ते ।
नमो मन्दगते तुभ्यं निस्त्रिंशाय नमोऽस्तु ते ॥ ६ ॥

तपसा दग्धदेहाय नित्यं योगरताय च ।
नमो नित्यं क्षुधार्ताय अतृप्ताय च वै नमः ॥ ७ ॥

ज्ञानचक्षुर्नमस्तेस्तु कश्यपात्मजसूनवे ।
तुष्टो ददासि वै राज्यं रुष्टो हरसि तत्क्षणात् ॥ ८ ॥

देवासुरमनुष्याश्च सिद्धविद्याधरोरग ।
त्वया विलोकिताः सर्वे नाशं यान्ति समूलतः ॥ ९ ॥

प्रसादं कुरु मे देव वरार्होऽहमुपागतः । शनिरुवाच— तुष्टोऽहं तव राजेन्द्र स्तवेनानेन सुव्रत । त्वया प्रोक्तमिदं स्तोत्रं यः पठिष्यति मानवः ॥ एककालं द्विकालं वा पीडामुक्तो भवेत् क्षणात् । मृत्युं मृत्युगतो दद्यां जन्मन्येव चतुर्थके ॥ यः पुनः श्रद्धया युक्तः शुचिर्भूत्वा समाहितः । शमीपत्रैः समभ्यर्च्य प्रतिमां लोहजां शुभाम् ॥ माषौदनं (माषदानं-इति पाठान्तरम् ) तिलैर्मिश्रं दद्याल्लोहं च दक्षिणाम् । कृष्णां गां वृषभं वापि यो वै दद्याद्द्विजातये ।मद्दिने तु विशेषेण स्तोत्रेणानेन पूजयेत् ॥ पूजयित्वा जपेत् स्तोत्रं भूत्वा चैव कृताञ्जलिः । तस्य पीडां न चैवाहं करिष्यामि कदाचन ॥ गोचरे जन्मलग्ने वा दशास्वन्तर्दशासु च । रक्षामि सततं तस्य पीडां हत्वा गृहस्य च ॥

यत्पैशुन्येन पङ्क्तावमृतलवभुजौ चक्रिचक्राग्रकृत्तौ
तद्दोषादेव रोषादहिमकरहिमकरग्राहलक्षेण लोकान् ।
अम्भोधौ मज्जयन्तौ दुरितजलनिधेः क्षिप्रमुन्मज्जयन्तौ
त्रायेतां तुल्यकालौ गतिषु घनतमोदेहकौ राहुकेतू ॥ ४२ ॥

यत्पैशुन्येनेति—राहुकेतू युष्मानिति शेषः। त्रायेतां रक्षेताम् ॥ पङ्क्तौ देवपङ्क्तौ अमृतलवभुजौ अमृतस्य यो लवः लेशः तं भुञ्जाते इति तथोक्तौ। ययोः सूर्याचन्द्रमसोः पैशुन्येन पर (राहुकेतु) दोषाविष्करणेन चक्रिणः श्रीमहाविष्णोः यच्चक्रं चक्रायुधं तस्य अग्रम् उपरिभागः तेन कृत्तौ छिन्नौ तद्दोषात् तयोः सूर्याचन्द्रमसोः पैशुन्यदोषादेव अहिमकरहिमकरयोः सूर्याचन्द्रमसोः ग्राहः उपरागः ग्रहणं स एव लक्षं व्याजः। "लक्षं व्याजशरव्ययो" रिति हैमः। तेन लोकान् जनान्। "लोकस्तु भुवने जन" इत्यमरः। अम्भांसि धीयन्ते अस्मिन्निति अम्भोधिः जलधिः। "कर्मण्यधिकरणे चे"ति किः। तस्मिन् मज्जयन्तौ मग्नान् कुर्वन्तौ दुरितं पापमेव जलनिधिः सागरः तस्मादुन्मज्जयन्तौ उद्धरन्तौ। मतभेदेन रूपकपरिणामौ। उपरागप्रयुक्तमम्भोधौ निमज्जनं सागरस्नानजन्यसुकृतेन पापजलधेरुन्मज्जनमिति विवेकः। विरोधाऽऽभासध्वनिः। गतिषु चारेषु तुल्यः समः कालः येषां तौ तथोक्तौ। घनं महच्च तत्तमः अन्धकारः छायेति यावत्। तदेव देहः शरीरं ययोस्तौ तथोक्तौ। शेषाद्विभाषेति कप्। तौ राहुकेतू, युष्मानिति शेषः। त्रायेतां रक्षेताम्।

वह्निपुराणे प्रजापतिसर्गाध्याये—सिंहिकाया मथोत्पन्ना विप्रचित्तेश्चतुर्दश। राहुर्ज्येष्ठश्च तेषां वै चन्द्रसूर्यप्रमर्दनः॥ श्रीमद्भागवते स्कन्धः ८ अध्यायः ९—देवलिङ्गप्रतिच्छन्नः स्वर्भानुर्देवसंसदि। प्रविष्टस्सोममपिबच्चन्द्रार्काभ्यां च सूचितः॥ चक्रेण क्षुरधारेण जहार पिबतः शिरः। हरिस्तस्य कबन्धस्तु सुधया प्लावितोऽपतत्॥ शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत्। यस्तु पर्वणि चन्द्रार्कावभिधावति वैरधीः॥ राहुरुत्तरकायोऽस्य पूर्वकायोऽभवद् ध्वजः॥

**गाणिक्याधिक्यसम्पत्प्रभवमदभराऽऽरम्भरम्भादिसुभ्रू-**
**सम्भोगोज्जृम्भिकुम्भस्तनसुदृढपरीरम्भसम्भावितश्रीः।**
**सम्राडेकस्त्रिलोक्यास्सुचिरचितशचीसौख्यसर्वस्वहारो**
**नेत्रैः सर्वैर्विदध्यात्स्थिरविभवमिहाखण्डमाखण्डलो वः॥ ४३॥**

अथ दिक्पतीन् क्रमशः प्रस्तौति—गाणिक्येत्यादि। आखण्डलः देवेन्द्रः वः युष्माकं विभवमैश्वर्यं विदध्यात् करोतु।

गणिकानां समूहः गाणिक्यम्। "गणिकाया यञिति वक्तव्य"मिति समूहार्थे यञ्। तस्य यत् अधिकस्य भावः आधिक्यं महत्त्वम्। ब्राह्मणादित्वाद्भावे ष्यञ्। तदेव सम्पत् विभवः तया प्रभवः उत्पत्तिर्यस्य स चासौ मदभरः गर्वातिशयः आनन्दातिशयो वा। "मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयो"रित्युभयत्रापि विश्वः। तस्यारम्भो यासां ताश्च ता रम्भा आदिर्यासां ताः सुभ्रुवः सुन्दर्यः तासां सम्भोगः रतिः तस्मिन् उज्जृम्भिनः रागातिशया-

दुच्छूनतां प्राप्नुवन्तश्च ये कुम्भसदृशाः स्तनाः। शाकपार्थिवत्वा-
दुत्तरपदलोपि समासः। तेषां तत्कृता वा सुदृढाः अतिगाढाः परी-
रम्भाः आलिङ्गनानि। "उपसर्गस्य घञ्यमनुष्ये बहुल"मिति उप-
सर्गेकारस्य दीर्घः। तैः सम्भाविता आदृता श्रीः सम्पत् यस्य स
तथोक्तः। त्रयाणां लोकानां समाहारस्त्रिलोकी। "अकारान्तोत्तर-
पदो द्विगुः स्त्रियामिष्ट" इति स्त्रीत्वम्। "द्विगो"रिति ङीप्।
तस्या एकः मुख्यः। "एके मुख्याऽन्यकेवला" इत्यमरः।
सम्राट् चक्रवर्ती तथोक्तः। सुचिरचितं चिरकालार्जितं बहुजन्मार्जि-
तमिति यावत्। यत् शच्याः इन्द्राण्याः। "शचीन्द्राणी"त्यमरः।
सौख्यं सुखम्। स्वार्थे ष्यञ्। तस्य सर्वस्वं हर्तुं शीलमस्येति
तथोक्तः। शच्यासहाऽनुभवयोग्यसर्वसुखानुभोक्तेति यावत्।
"सुप्यजातौ"विति णिनि। सः आखण्डलः सहस्राक्षः देवेन्द्रः
सर्वैः सहस्रैरपि नेत्रैः अक्षिभिः इह अस्मिँल्लोके अस्मिञ्जन्मनि वा
अखण्डं सम्पूर्णं स्थिरविभवं शाश्वतमैश्वर्यं विदध्यात् करोतु। अस्मि-
न्नेव जन्मनि ऐहिकसुखसाधकं धनधान्यादिसम्पदं परत्र निरतिशय-
शाश्वतसुखसम्पादकं मुक्तिरूपैश्वर्यं चानुगृह्णात्विति भावः॥

क्षुत्क्षामक्षामसर्वत्रिदशपरिषदादीनवादीनवाद-
प्राप्तस्वर्वासिदूत्योपनतमखहविर्भागवाहप्रयासः।
स्त्रीभ्यां स्वाहास्वधाभ्यां निबिडदृढकुचाभोगगाढोपगूढः
पापारण्यान्यरण्याश्रितनिजजननः पावकोऽयं प्रदद्यात्॥ ४४॥

क्षुदित्यादि । पावकः अग्निः युष्माकमिति शेषः । पापानि किल्बिषाण्येव अरण्यानि प्रदह्यात् निश्शेषं दहतु ॥ क्षुधा बुभुक्षया क्षामक्षामाः अत्यन्तं कृशाः । आभीक्ष्ण्ये द्वित्वम् । सर्वे च ते त्रिदशाः देवाः तेषां परिषत् सभा तस्याः आदीनवाः क्लेशाः । "आदीनवाऽऽस्रवौ क्लेश" इत्यमरः । तानतन्ति सततं गच्छन्तीति आदीनवातः । "अत सातत्यगमने" क्विप् । क्लेशज्ञापकाश्च ये दीनवादाः दीनवचांसि तैः प्राप्तं यत्स्वर्वासिनां दूत्यं दूतभावः सेवकत्वम् । "दूतवणिग्भ्याञ्चे"ति भावे यः । तेन उपनतः प्राप्तो मखानां क्रतूनाम् । "सप्ततन्तुर्मखः क्रतु"रित्यमरः । हविर्भागाः तत्तद्देवतोद्देशेन क्रतुषु हूयमाना हविर्भागाः तेषां वाहः वहनं तेन तस्य वा प्रयासः आयासो यस्य स तथोक्तः स्वाहास्वधाभ्यां तन्नामिकाभ्यां स्त्रीभ्यां पत्नीभ्यां निबिडाः सान्द्राः । "घनं निरन्तरं सान्द्र" मित्यमरः । दृढाः कठिनाः ये कुचाः तेषामाभोगः परिपूर्णता । "आभोगः परिपूर्णते" त्यमरः । तेन गाढं दृढं यथा तथा उपगूढः आलिङ्गितस्तथोक्तः । अरणिः निर्मन्थ्यदारु तदाश्रितं निजं जननम् उत्पत्तिः यस्य स तथोक्तः । अरणिसम्भवः सोऽयं पावकः वैतानाग्निः वः युष्माकं पापारण्यानि किल्बिषाण्येव काननानि । मतभेदेन रूपकपरिणामौ । प्रदह्यात् निश्शेषं दहतु । अत्र पावक इत्यन्वर्थपदप्रयोगोऽत्यन्तमुचितः । अरण्याश्रितनिजजनेः पापदहनहेतुत्वात् काव्यलिङ्गम् ।

देवीभागवते स्कन्धः ९–अध्यायः ४३–नारायण उवाच–हविर्ददति विप्राश्च भक्त्या च क्षत्रियादयः। सुरा नैव प्राप्नुवन्ति तद्दानं मुनिपुङ्गव॥ देवा विषण्णास्ते सर्वे तत्सभां च ययुः पुनः। गत्वा निवेदनं चक्रुराहाराऽऽभावहेतुकम्॥ ब्रह्मा श्रुत्वा तु ध्यानेन श्रीकृष्णं शरणं ययौ। पूजां चकार प्रकृतेः ध्यानेनैव तदाज्ञया॥ प्रकृतेः कलया चैव सर्वशक्तिस्वरूपिणी। अतीव सुन्दरी जाता रमणीया मनोहरा॥ उवाचेति विधेरग्रे पद्मयोने वरं वृणु। ब्रह्मोवाच—त्वमग्नेर्ग्राहिका शक्तिर्भव याऽतीव सुन्दरी॥ त्वन्नामोच्चार्य मन्त्रान्ते यो दास्यति हविर्नरः। सुरेभ्यस्तत्प्राप्नुवन्ति सुरास्त्वानन्द-पूर्वकम्। अग्नेः सम्पत्स्वरूपा च श्रीरूपा सा गृहेश्वरी॥ तत्राऽऽ-जगाम सन्त्रस्तो वह्निर्ब्रह्मनिदेशतः। सामवेदोक्तध्यानेन ध्यात्वा तां जगदम्बिकाम्॥ सम्पूज्य परितुष्टाव पाणिं जग्राह मन्त्रतः।

अध्यायः ४४—ब्रह्मा च मानसीं कन्यां ससृजे च मनोह-राम्। स्वधाभिधां च सुदतीं लक्ष्मीलक्षणसंयुताम्॥ पितृभ्यश्च ददौ ब्रह्मा तुष्टेभ्यस्तुष्टिरूपिणीम्। ब्राह्मणानां चोपदेशं चकार गोपनीयकम्॥ स्वधान्तं मन्त्रमुच्चार्य पितृभ्यो देयमित्यपि। स्वाहा शस्ता देवदाने पितृदाने स्वधा स्मृता॥

भीमभ्रूभङ्गभङ्गीविकटपरिनटत्तारकादुर्निरीक्ष्य-
व्यात्तभ्राष्ट्रोपमानाऽऽननतटघटिताऽरालदंष्ट्राकरालः।
आरूढप्रौढवाहद्विषदवनिपतिः पापिनामुग्ररूपः
काले वः सौम्यमूर्तिस्स तु भवतु तदा वान्तकोपोऽन्तको वः॥

भीमेत्यादि——अन्तको यमः वः युष्माकं तदा काले अन्तकाले वान्तकोपः सौम्यमूर्तिर्भवतु ।

भीमाः भयङ्कराश्च ते भ्रूभङ्गयः भ्रुकुटयः तेषां भङ्गया विधया विकटं विकृतं यथा तथा परिनटन्त्यौ ये तारके कनीनिके ताभ्यां दुर्निरीक्ष्यः द्रष्टुमशक्य इत्यर्थः । व्यात्तं विवृतम् भ्राष्ट्रः अम्बरीषम् । "क्लीबेऽम्बरीषं भ्राष्ट्र" इत्यमरः । उपमानं सदृशवस्तु यस्य तच्च तदाननं मुखं तस्य तटः प्रदेशः तत्र घटिताः कृतसन्धानाः अराला वक्राश्च ता दंष्ट्राः दशनाः ताभिः करालः भयङ्करस्तथोक्तः आरूढः अधिष्ठितः प्रौढः प्रवृद्धः । "प्रवृद्धं प्रौढमेधित" मित्यमरः । वाहद्विषदवनिपतिः महिषप्रभुः येन स तथोक्तः । महिषवाहनः । "लुलायो महिषो वाहद्विषत्कासारसैरिभा" इत्यमरः । पापिनाम् उग्रं भयङ्करं रूपं विग्रहो यस्य स तथोक्तः । सः प्रसिद्धः ज्ञानीति वा अन्तको यमः । "वैवस्वतोऽन्तक" इत्यमरः । वः युष्माकं तदा काले प्राण-प्रयाणकाले वान्तः त्यक्तः कोपः येन स तथोक्तस्सन् सौम्या प्रसन्ना मूर्तिः देहो यस्य स तथोक्तो भवतु युष्मास्वनुग्रहपूर्णो भवतु ।

दंष्ट्रावज्राङ्कुराग्रग्रथितदृढतरोत्तप्तनिष्कासनोद्य-
द्व्यत्यस्तोल्लेलिहानप्रचलितरसनापन्नगो भीमवक्त्रः ।
आबिभ्राणः करालं कमपि च करवालं महाभीमकायः
क्रव्यादव्यादशेषद्विषदुपधिविधाऽऽविष्कृताद् दुष्कृताद्वः ॥ ४६॥

दंष्ट्रेत्यादि—क्रव्यात् राक्षसो निर्ऋतिः वः युष्मान् दुष्कृतात् शत्रुकृतात् अपचारात् अव्यात् रक्षतात् ॥ दंष्ट्रा एव वज्रस्याङ्कुराः तेषामग्राणि तेषु ग्रथिताः घटिताः । व्यत्यस्तं विपरीतं यथा तथा उल्लेलिहाना उदास्वाद्यमाना अत एव प्रचलिता प्रकृष्टं चलिता चेयं रसना जिह्वा सैव पन्नगः सर्पः यस्य तथोक्ताः । भीमं भयङ्करंवक्त्रं मुखं यस्य स तथोक्तः । करालं भयङ्करं कमपि ईदृगिति निर्देष्टुमशक्यं करवालं महाऽसिम् । आबिभ्राणः धृतवान् महान् बृहन् भीमः भयङ्करः कायो देहो यस्य स तथोक्तः । तादृशः क्रव्यं मांसमत्तीति क्रव्यात् राक्षसः निर्ऋतिः । "क्रव्ये चे"ति अदेः क्विप् । "राक्षसः कौणपः क्रव्यात्" इत्यमरः । वः युष्मान् अशेषाः समस्ताश्च ते द्विषन्तः शात्रवास्तेषामुपधिः कपटः । "कपटोऽस्त्री व्याजदम्भोपधय" इत्यमरः । विधा प्रकारः तया आविष्कृतात् प्रकटितात् दुष्कृतात् अपचारात् अव्यात् रक्षतात् । शत्रुभिः कपटेन कापट्येन कृतादपचाराद्रक्षतात् ॥

फूत्कुर्वत्फण्यधीश प्रतिभयदिविषद्द्वन्द्वदुर्मोचताह-
क्पाशव्याबद्धनानावृजिनमय जनस्तोमदण्डप्रचण्डः ।
पश्चार्धं यश्च रक्षत्यनुपधि जगतां सर्वबीजप्ररोह-
प्रारम्भश्रीनिदानं स हरतु दुरितान्यप्पतिर्दिक्पतिर्वः ॥ ४७ ॥

फूत्कुर्वदित्यादि—अप्पतिः वरुणः वः युष्माकं दुरितानि पापानि हरतु नाशयतु ।

फूत्कुर्वन् फूत्कारशब्दं कुर्वन् यः फणीशः सर्पराडादिशेषः तस्य प्रतिभयः भयङ्करः । "भयङ्करं प्रतिभय"मित्यमरः । सर्पराजादपि वा स इववा भयङ्कर इति भावः । स च दिविषदां देवानां बृन्दंसमूहः तेनापि दुर्मोचः मोक्तुमशक्य इत्यर्थः । "ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थे" ष्विति खलु । तादृक् तादृशश्च यः पाशः पाशायुधं तेन व्याबद्धाः विशेषेण बद्धाः नानावृजिनमयाः बहुपापप्रचुरा ये जनास्तेषां स्तोमः समूहः तस्य दण्डे शिक्षायां प्रचण्डः तीव्रस्तथोक्तः यो वरुणः जगतां लोकानाम् अपरश्चासावर्धः पश्चार्धः पश्चिमभागः । "अपरस्यार्धे पश्चभावो वक्तव्य" इत्यपरशब्दस्य पश्चादेशः । तम् अनुपधि निष्कपटं रक्षति पालयति सर्वेषां बीजानां प्ररोहाः नूतनाङ्कुराः तेषां प्रारम्भः प्रथमाविर्भावः स एव श्रीः सम्पत् तस्या निदानम् आदिकारणभूतः । "निदानं त्वादिकारणम्" इत्यमरः । जलाधिदेवताया वरुणस्याऽनुग्रहेण वृष्टिः तत एव सस्योत्पत्ते रेवमुक्तम् सः दिक्पतिः पश्चिमदिगधीशः अपां पतिः अप्पतिः वरुणः वः दुरितानि पापानि हरतु नाशयतु ॥ काशीखण्डे पूर्वार्धे अध्यायः १२.

एकस्मिन् क्वापि सरसि जलक्रीडापरायणान् । तेषां मध्ये ददर्शाथ समाधिस्थः स कर्दमः ॥ स्वं शिशुं शिशुमारेण नीयमानं सुविह्वलम् । प्रसह्य न त्वोदधये दृष्टवांस्तं समर्पितम् ॥ कुतो जलानामधिप शिवभक्तस्य बालकः । प्रजापतेः कर्दमस्य महाभागस्य

धीमतः ॥ त्रिशूलपाणिनेत्युक्तः क्रोधताम्राननेन च । बालं रत्नैरलङ्कृत्य बद्ध्वा तं शिशुमारकम् ॥ नत्वा विज्ञापयत्तं च नापराधाम्यहं प्रभो । पाशेन बद्ध्वा तद्यादः शिशुहस्ते समर्पितम् । गृहाणेमं स्वतनयं पार्षदे शङ्कराऽऽज्ञया ॥ याहि स्वभवनं वत्स ब्रुवतीति स कर्दमः । समाधिसमये सर्वमिति शृण्वन्नुदारधीः ॥ गृहीतशिशुमारं च पार्श्वेऽलङ्कृतकर्णिकम् । कृतप्रणाममालिङ्ग्य जिघ्रंस्तन्मुखपङ्कजम् ॥ पुनर्जातमिवामंस्त पश्यंश्चापि मुहुर्मुहुः । ततः स तनयः पृष्ट्वा पितरं प्रणिपत्य च ॥ जगाम तपसे तूर्णं श्रीमद्वाराणसीं पुरीम् । आविरासीन्महादेवस्तुष्टस्तत्तपसा ततः ॥ कार्दमिरुवाच—

सर्वासामाधिपत्यं मे देह्यपां यादसामपि । अभ्यषिञ्चत तं तत्र वारुणे परमे पदे ॥ अधीश्वरः पाशपाणिर्भव सर्वामरप्रियः । इत्युक्त्वाऽन्तर्दधे शम्भुर्वरुणोऽपि स्वबन्धुभिः ॥ इमं लोकमलङ्कुर्वंस्तदारभ्य स्थितो द्विजः ।

**सत्वप्रायः परीक्षाकलितफणफणि ग्रामणीसत्फणालि**
**प्रच्छन्नस्वर्णभूभृच्छिखर सरभसोत्क्षेपदक्षप्रयत्नः ।**
**सप्तस्कन्धात्मकस्सन्सकलदिविषदां नित्यमाधारभूतो**
**दत्तां वः सत्वयोगं वपुषि बहुरुजादुश्च्यवायुश्च वायुः ॥ ४८ ॥**

सत्वप्राय इति । वायुः वः युष्माकं वपुषि शरीरे सत्वयोगं बलसम्बन्धं दत्तां ददातु ।

सत्वप्रायः बलप्रचुरः महाबलशालीत्यर्थः। "सत्वं गुणे पिशाचादौ बल" इति विश्वः। "प्रायो वयसि बाहुल्य" इति वैजयन्ती। परित ईक्षणं परीक्षा, तया कलिताः युक्ताः (कलिः कवीनां कामधेनुः) फणाः स्फटाः। "स्फटायां तु फणे"त्यमरः। यस्य स च फणिनां सर्पाणां ग्रामणिः श्रेष्ठः "ग्रामणीर्नापिते पुंसि श्रेष्ठ" इत्यमरः। सत्सूद्विषे"त्यादिना नयतेः क्विप्। "अग्रग्रामाभ्यां नयतेर्णो वाच्य" इति णत्वम्। तस्य सत्यः श्रेष्ठाः फणाः स्फटाः तासामालिः पङ्क्तिः। "आलिरावलिः पङ्क्ति"रित्यमरः। तया प्रच्छन्नाः आच्छन्ना ये स्वर्णभूभृतः मेरोः शिखराः अग्राणि तेषां रभसेन वेगेन सहितः सरभसः। 'तेन सहेति तुल्ययोग' इति बहुव्रीहिः। "वोपसर्जनस्ये"ति सहस्य सः। सचासावुत्क्षेपः ऊर्ध्वे प्रक्षेपः तत्र दक्षः समर्थ प्रयत्नो यस्य स तथोक्तः। सप्त स्कन्धाः समूहाः काया वा। "स्कन्धः स्यान्नृपतावंसे सम्परायसमूहयोः। काये तरुप्रकाण्डे च भद्रादौ छन्दसोभिदी"ति मेदिनी। आत्मा स्वरूपं यस्य स तथोक्तः सन्। शेषाद्विभाषेति कप्। सकलाः सर्वे च ते दिविषदः देवास्तेषाम्। सत्सूद्विषेत्यादिना क्विप्। "तत्पुरुषे कृति बहुल"मिति सप्तम्या अलुक्। "हृद्द्युभ्याञ्चे"ति वा। सुषामादिषु चेति षत्वम्। नित्यं सदा आधारभूतः सः वायुः वः युष्माकं वपुषि शरीरे सत्वयोगं बलसम्बन्धम्। बह्वीभिः रुजाभिः रोगैः दुःखेन च्यूयते नाश्यत इति दुश्च्यवम्। च्युङ्गतावित्यस्माद-न्तर्भावितण्यर्थो "दीषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खलि"ति कर्मणि

खलु । बहुभी रोगैरपि नाशयितुम् अशक्यमिति यावत् । तच्च तत् आयुर्दुश्च्यवायुः तत् दत्तां ददातु । नीरोगं दीर्घमायुर्ददात्विति भावः ॥

पाद्मे सृष्टिखण्डे अध्यायः—७. दितेश्छिद्रं परिप्रेप्सुरभवत्पाकशासनः । अकृत्वा पादयोः शौचं शयाना मुक्तमूर्धजा ॥ ततस्तदन्तरं लब्ध्वा प्रविश्यान्तः शचीपतिः । वज्रेण सप्तधा चक्रे तं गर्भं त्रिदशाधिपः ॥ ततः सप्तैव ते जाताः कुमाराः सूर्यवर्चसः । मरुतो नाम ते नाम्ना भवन्तु शुभभागिनः ॥ कृत्वा मरुद्गणं देवैस्समानममराधिपः । दितिं विमानमारोप्य ससुतामगमद्दिवम् ॥ श्रीवेङ्कटेशमाहात्म्ये अध्यायः—१.

शतानन्द उवाच–पुरा वैकुण्ठनगरे द्वारि शेषं समादिशत् । देवादिदेवो भगवान् रमयन् रमया सह ॥ तस्मिन् काले महाराज मारुतः प्राणवल्लभः । अकस्मात्कारणात्प्राप्तो भगवद्दर्शनाय च ॥ द्वारं निरोधयामास रुक्मदण्डेन सर्पराट् । किमर्थं रुद्धसे (रुन्धसे) मूर्ख कार्यस्य महती त्वरा ॥ शेष उवाच—

किं गरिष्ठवचः प्रोक्तं जीवनेच्छा न विद्यते । बले ज्ञाने विरागे च विष्णुभक्तो न मत्समः ॥ तयोर्विवादो ह्यभवच्छेषवाय्वोर्महात्मनोः । विष्णुः—किमर्थं क्रोशसे शेष पुमान् कोऽत्राऽऽगतः परः । शेषः–मलयाचलवासेन वायुनाऽत्यन्तगर्विणा ॥ अवाच्यवचनं चोक्तमनेनात्यन्तमानिना । एतस्मिन्नेव काले तु साष्टाङ्गं प्रणिपत्य तम् ॥ वायुस्तुष्टाव पुरुषं पुराणं वेदगोचरम् । विष्णुः—न वाङ्मात्रेण

पौरुष्यं क्रिया केवलमुत्तमम् । अत्रैवोत्तरदिग्भागे पर्वतं मेरुनन्दनम् ॥ स्वकायरज्जुना बद्ध्वा बलं ते यावदस्ति हि । तिष्ठ भद्र महायोगिन् विषफूत्कारसंयुतः ॥ हृषीकेशवचः श्रुत्वा हृष्टपुष्टाङ्गविक्रमः । स्वकाय-रज्जुना बद्ध्वा ह्यानन्दाद्रिं महीपते ॥ तमालोक्याग्निदायादः पर्वतं तमुपागतः । आज्ञया वासुदेवस्य देवानां पश्यतामपि ॥ कनिष्ठा-ङ्गुलि संस्पर्शात् पर्वतो भोगिसंयुत । सहस्रमर्घलक्षं च दक्षिणा-भिमुखा ययौ ॥

मेरु.—त्रायतां त्रायतां स्वामिन् पुत्रं बालं महाबल । एव-मुक्तो मेरुणाथ वायुस्त्वरितमानसः ॥ शेषेण गिरिपुत्रेण स्वर्णमुख्या-स्तटोत्तरे । स्थापयामास राजेन्द्र गिरिराजं सपन्नगम् । राजन् शेष-निमित्तेन शेषाचलमिमं विदुः ॥

विष्णुब्रह्मादिदेवाऽसुलभ पुरहरप्रेममित्रत्वसम्प-
त्सम्प्राप्तिप्राप्त तादृङ्नवनिधि विभवाऽधीशताराजराजः ।
यः कैलासे गिरीन्द्रे भजति पशुपते र्नित्यसामन्तभावं
स श्रीमान् सन्ततं वो वितरतु विभवा नक्षरान्यक्षराजः ॥ ४९ ॥

विष्णुब्रह्मेत्यादि—यक्षराजः कुबेरः वः युष्मभ्यम् अक्षरान् शाश्वतान् विभवान् ऐश्वर्याणि वितरतु ददातु ॥ यः कुबेरः विष्णुः ब्रह्मा आदिर्येषां ते देवाः तैरपि सुखेन लब्धुमशक्यं च तत्पुरहरस्य त्रिपुरारेः सदाशिवस्य प्रेमयुक्तं मित्रत्वं सख्यम् । मध्यमपदलोपी समासः । तदेव सम्पत् ऐश्वर्यं तस्याः सम्प्राप्तिः तया प्राप्ता लब्धा

तादृशी निरुपमा या नवानां निधीनां शङ्खपद्मादीनां विभवानां नवनिधि-रूपैश्वर्याणाम् अधीशता अधिपतित्वं तया राजराजः चक्रवर्ती तथोक्तः यक्षाणां राजेत्यर्थान्तरम् । निरुक्तिरलङ्कारः । "यक्षे चन्द्रे च राजा स्यादि"ति त्रिकाण्डीशेषः । कैलासे तन्नामके गिरीन्द्रे पर्वतश्रेष्ठे रजतगिरौ पशुपतेः सदाशिवस्य नित्यः शाश्वतश्चासौ सामन्तभावः सन्निहितराज्याधिपतित्वं करप्रदायिराजत्वं वा तं भजति प्राप्नोति । सः श्रीमान् प्रशस्तैश्वर्यवान् यक्षराजः कुबेरः । "कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः" इत्यमरः । वः युष्मभ्यम् अक्षरान् शाश्वतान् विभवान् ऐश्वर्याणि सन्ततं सदा वितरतु दद्यात् ॥

श्रीशिवपुराणे रुद्रसंहितायां सृष्टिखण्डे अध्यायः १९—पाद्मे कल्पे मम पुरा ब्रह्मणो मानसात्सुतात् । पुलस्त्याद्विश्रवाज्जज्ञे तस्य वैश्रवणस्सुतः । तेनेयमलका भुक्ता पुरी विश्वकृता कृता । आराध्य त्र्यम्बकं देवमत्युग्रतपसा पुरा ॥ संस्थाप्य शाम्भवं लिङ्गं सद्भाव-कुसुमार्चितम् । तावत्तताप स तपस्त्वगस्थिपरिशेषितम् ॥ यावद्बभूव तद्वर्ष्म वर्षाणामयुतं शतम् । ततस्सह विशालाक्ष्या देवो विश्वेश्वरः स्वयम् ॥ अलकापतिमालोक्य प्रसन्नेनान्तरात्मना । उवाच वरदो-ऽस्मीति तदाचक्ष्वालकापते ॥ उन्मील्य नयने यावत्स पश्यति तपोधनः । पुरो ददर्श श्रीकण्ठं चन्द्रचूडमुमापतिम् ॥ तत्तेजः परि-भूताक्षितेजाः सम्मील्य लोचने । उवाच देवदेवेशं मनोरथपथा-तिगम् ॥ निजाङ्घ्रिदर्शने देव दृक्सामर्थ्यं प्रयच्छ मे । ददौ दर्श-

नसामर्थ्यं स्पृष्ट्वा पाणितलेन तम् ॥ प्रसार्य नयने पूर्वमुमामेव व्यलोकयत् । अहो रूपमहो प्रेम सौभाग्यं श्रीरहो भृशम् ॥ इत्यशादीदसौ पुत्रो मुहुर्मुहुरतीव हि । तावत्पुस्फोट तन्नेत्रं वामं वामाविलोकनात् ॥ ईश उवाच—

निधीनामथ नाथः त्वं गुह्यकानां भवेश्वरः । मया सख्यं च ते नित्यं वत्स्यामि च तवान्तिके ॥ अलकां निकषा मित्र तव प्रीतिविवृद्धये । इति दत्वा वरानीशः पुनराह शिवां शिवः ॥ प्रसादं कुरु देवेशि तपस्विन्यङ्गजेऽत्र वै । देव्युवाच—

वत्स ते निर्मला भक्तिर्भवे भवतु सर्वदा । भवैकपिङ्गो नेत्रेण वामेन स्फुटितेन ह ॥ कुबेरो भव नाम्ना त्वं मम रूपेर्ष्यया सुत ॥

**ग्रैवेयक्षुद्रघण्टानिवहघणघणात्कारि कण्ठोपकण्ठ-**
**प्रक्रीडच्छाक्करेन्द्र त्रिकघटितकुथाऽऽच्छन्न पृष्ठाधिरूढः ।**
**सार्धं देव्याऽम्बयाऽर्धं वपुषि च गतया संसरन्हंसवर्णः**
**सम्भेदी त्वंहसां वो वसतु मनसि सोत्साहमीशानदेवः ॥ ५० ॥**

ग्रैवेयेत्यदि—ईशानदेवः ईशानदिक्पतिः शिवः वः युष्माकं मनसि हृदये सोत्साहम् उत्साहेन सहितं यथा तथा वसतु ॥ ग्रीवायां कन्धरायाम् । "ग्रीवायां शिरोधिः कन्धरे"त्यमरः । भवाः ग्रैवेयाः । "ग्रीवाभ्योऽण् चे"ति ढञ् । क्षुद्रघण्टाः किङ्किण्यः तासां निवहः समूहः । तेन घणघणात्कारी घणघणेति निनदन् यः कण्ठः गलं तस्योपकण्ठे समीपे प्रक्रीडन् सञ्चलन् यः शाकरेन्द्रस्य वृषभश्रेष्ठस्य

नन्दीश्वरस्य त्रिकं पृष्ठवंशाधस्स्थानं वालमूल मित्यर्थः । "पृष्ठवंशाधरे त्रिकम्" इत्यमरः । तत्र घटितः यः कुथः परिस्तोमः । "परिस्तोमः कुथो द्वयो"रित्यमरः । रत्नकम्बलमित्यर्थः । तेन छन्नम् आवृतं च तत्पृष्ठं तदधिरूढः तत्र निषण्ण इत्यर्थः । अत्र कुथाग्रेष्वित्यनन्वितः पाठः । वपुषि देहे देहस्येत्यर्थः । अर्धभागं वामार्धं गतया प्राप्तया अम्बया देव्या पार्वत्या सह । "मृडानी चण्डिकाम्बिके"त्यमरः । संसरन् चरन् कुटुम्बी सन्निति वा । हंसस्य वर्ण इव वर्णो यस्य स तथोक्तः श्वेतकान्तिः ईशानदेवः ईशानदिगधिपतिः शिवः नः युष्माकं मनसि हृदये अंहसां पापानां सम्भेदी सम्यग्भेत्ता सन् सोत्साहम् उत्साहेन सहितं यथा तथा । सोत्प्रासमित्यपपाठः । वसतु निवासं करोतु ॥

**आशापूर्तिं दशाऽऽशा विदधतु भवतां यत्र वृत्रारिमुख्या-**
**स्तत्राशेशा वसन्तो हरिदधिपतयः पान्ति लोकानशेषान् ।**
**अभ्रम्वाद्याः करिण्यो निजपतिभिरिभैर्यान्ति यत्र व्यवायं**
**शुद्धोदन्वज्जले वा व्यवधिधरणिभृद्दण्डशैलान्तरे वा ॥ ५१ ॥**

दिक्पालानन्तरं दिशः प्रस्तौति—आशापूर्तिमिति । दश आशाः दिशः भवतां युष्माकम् अधिकाशानां तृष्णानाम् । "आशा तृष्णापि चायते"त्यमरः । पूर्तिं परिपूर्णतां विदधतु कुर्वन्तु ।

वृत्रारिः वासवः । "वासवो वृत्रहा वृषा" इत्यमरः । मुखमिव प्रधानत्वान्मुख्यः प्रधानः येषां ते तथोक्ताः । सत्रेषु यज्ञेषु ।

"सत्रमाच्छादने यज्ञ" इत्यमरः। आशा आयता तृष्णा येषां ते यज्ञहविर्भागेषु सतृष्णाः ते च ते ईशाः प्रभवः तथोक्ताः। हरितां दिशाम्। "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ता" इत्यमरः। अधिपतयः पालकाः यत्र यासु वसन्तः निवसन्तस्सन्तः अशेषान् समस्तान् लोकान् भुवनानि। "लोकास्तु भुवने जन" इत्यमरः। पान्ति रक्षन्ति। अभ्रमुः प्राग्दिग्गजभार्या आद्या प्रथमा यासां तास्तथोक्ताः। करिण्यः गजकामिन्यः। "करिणी धेनुका वशे"त्यमरः। निजपतिभिः ऐरावताद्यैः इभैः गजैः यत्र यासु दिक्षु अथ वा शुद्धोदन्वतः शुद्धोदसागरस्य। "उदन्वानुदधिस्सिन्धु"रित्यमरः। जले अवधिधरणिभृतः सीमापर्वतस्य लोकालोकस्य गण्डशैलस्य भूकम्पादेः पर्वताच्च्युतस्य स्थूलपाषाणस्य। "गण्डशैलास्तु च्युताः स्थूलोपला गिरे"रित्यमरः। तस्य अभ्यन्तरे मध्ये वा व्यवायं ग्राम्यधर्मं रतिम्। "व्यवायो ग्राम्यधर्मे" इत्यमरः। यान्ति प्राप्नुवन्ति। ताः दश आशाः दिशः भवतां युष्माकम् आशानाम् आयतानां तृष्णानां पूर्तिं परिपूर्णतां विदधतु कुर्वन्तु। दिग्गजाः—"ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः। पुष्पदन्तः सार्वभौमस्सुप्रतीकश्च दिग्गजाः"॥ तेषां स्त्रियः—"करिण्योऽभ्रमुः कपिला पिङ्गलाऽनुपमा क्रमात्। ताम्रपर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती"त्यमरः॥

सोढुं धामाक्षमत्वात्परिधृत बडबारूपसज्ञानुधाव-
त्कर्कीभूतार्कतेजः प्रचयभरित तन्नासिकागर्भजातौ ।
सर्वस्वर्वासिवैद्यौ सकलपुमुपमाऽऽत्मीयरूपा वजस्नं
दस्रौ वः श्रीनिदानं वपुषि वितरतां स्फारमारोग्यभाग्यम् ॥५२॥

दिग्दिक्पालकाऽनन्तरं स्वर्वैद्यौ प्रस्तौति––सोढुमिति । दस्रौ अश्विनीसुतौ वः युष्माकं वपुषि देहे आरोग्यभाग्यम् आरोग्यातिशयं वितरतां दत्ताम् ॥ धाम कान्तिं सोढुं क्षन्तुम् । "सहिबहोरोदवर्ण-स्ये"त्योत्वम् ॥ अक्षमत्वात् असामर्थ्यात् बडबायाः अश्विन्याः रूपं यस्याः साऽसौ संज्ञा सूर्यभार्या । "संज्ञा स्याद्धानुभार्याया"मिति नानार्थसङ्ग्रहः । तामनुसृत्य धावन् शीघ्रं गच्छन् कर्कीभूतः धृताश्वरूपः । "कर्कः कर्के राशिभेदे शुक्लाश्व" इति निघण्टुः । योऽर्कः सूर्यः । तस्य तेजसो वीर्यस्य प्रचयेन समूहेन भरिते पूरिते पूर्णे वा ये नासिके नासिकारन्ध्रे ते एव गर्भौ ताभ्यां जातौ तथोक्तौ सर्वेषां स्वर्वासिनां देवानां वैद्यौ भिषजौ सकलाः सर्वे ये पुरुषाः तेषाम् उपमा उपमानभूतम् आत्मीयं स्वकीयम् । "वृद्धाच्छ" इति शैषिकश्छः । रूपम् आकारो ययोस्तौ तथोक्तौ । लोके "एष पुमान् अश्विनीसुताविव सुन्दर" इत्येतावुपमीयेते, लोकातिशायि सौन्दर्यवन्ताविति यावत् । दस्रौ आश्विनेयौ । "दस्रावाश्विनेया"वित्यमरः । वः युष्माकं वपुषि शरीरे श्रियः सम्पत्तेः निदानम् आदिकारणभूतं स्फारम् अधिकम्

आरोग्यम् अरोगतैव भाग्यं सम्पत् । "आरोग्यभाग्य"मिति कविशैल्यनुगुणः पाठः । आरोग्यभारमिति पाठे आरोग्यातिशयमित्यर्थः । अजस्रं सर्वदा वितरतां यच्छताम् । स्ववैद्ययोरारोग्यभाग्यवितरणम् अत्यन्तं समुचितम् ।

शिवपुराणे उमासंहितायामध्यायः—३५—संवर्तुलं तु तद्रूपं दृष्ट्वा संज्ञा विवस्वतः । असहन्ती ततश्छायामात्मनस्साऽसृजच्छुभाम् ॥ अस्यान्तु त्रीण्यपत्यानि जनयामास भास्करः । संज्ञायां तु मनुः पूर्वं श्राद्धदेवः प्रजापतिः ॥ यमश्च यमुना चैव यमलौ सम्बभूवतुः । अगच्छद्वडवा भूत्वाऽऽच्छाद्य रूपं ततः स्वकम् ॥ छायोवाच— असहन्ती च तत्संज्ञा वने वसति शाद्वले । ततोऽधियोगमास्थाय स्वां भार्यां हि ददर्श ह ॥ मैथुनाय विचेष्टन्तीं परपुंसोऽभिशङ्कया । मुखतो नासिकायान्तु शुक्रं तत्त्वदधान्मुने ॥ देवौ ततः प्रजायेतामश्विनौ भिषजौ वरौ ॥

**पायाद्विष्णो र्द्वितीयं पद मतिविमला यत्र निर्णेजनाम्बु-**
**भ्रान्तिं धत्ते द्युगङ्गा दिनकरशशिनौ यस्य गुल्फायमानौ ।**
**सन्तानीभूय भूयः प्रसृत इह गुणो यस्य वीचीतरङ्ग-**
**न्यायेनानीयमानः प्रविशति मरुता प्राणिनां कर्णवीथीम् ॥५३॥**

दिग्भ्योऽनन्तरं सकलदिग्व्यापिनमाकाशं प्रस्तौति पायादिति । विष्णोः त्रिविक्रमस्य द्वितीयं पदं पादः पादन्यासस्थानं वा । विष्णोः पदं क्रमोऽत्रेति स्वामी । आकाश इति यावत् । युष्मानिति शेषः ।

पायात् रक्षतु ॥ यत्र आकाशे अतिविमला स्वच्छा द्युगङ्गा आकाश-गङ्गा । "दिव उदि"त्युत् । निर्णेजनाम्बुनः [विष्णु] पादप्रक्षालनोदकस्य भ्रान्तिं भ्रमं धत्ते धरति । भ्रान्तिमदलङ्कारः । यस्य विष्णुपदस्य दिनकरशशिनौ सूर्याचन्द्रमसौ गुल्फौ पादग्रन्थी । "तद्ग्रन्थी घुटिके गुल्फा"वित्यमरः । ताविवाचरत इति गुल्फायमानौ । कर्तुः क्यङ् सलोपश्चेति क्यङन्तात् कर्तरि लटश्शानच् । पादग्रन्थिस्थानीयौ (उपमा) यस्य आकाशस्य गुणः शब्दः । "शब्दगुणकमाकाश"मिति न्यायशास्त्रम् । इह आकाशे भूयः प्रसृतः भूयिष्ठं व्याप्तः सन्तानीभूय पङ्क्तिरूपतां प्राप्य "सन्तानः सन्ततौ (पङ्क्तौ) गोत्रे स्यादपत्ये सुरद्रुम" इति मेदिनी । वीचीतरङ्गन्यायेन समुद्रादिषु पाषाणादिप्रक्षेपे सर्वतस्तरङ्गपङ्क्तिरुदेति तथा आनीयमानः प्राप्यमाणः सन् प्राणिनां जन्तूनां कर्णवीथीं श्रवणमार्गं प्रविशति तादृशं द्वितीयं विष्णुपदमाकाशः युष्मान् पायात् रक्षतात् ।

क्रत्वङ्गत्वङ्गदश्वव्यपगमकुतरुट् सागरोद्दण्डबाहा-
दण्डोत्खाताखिलक्ष्मातल विवर समाक्रान्तसंवर्धिताऽऽत्मा ।
श्रीदेव्या जन्मभूमिर्वसनमथ भुवः क्ष्माधराणां शरण्यः
पुण्यागण्यप्रभावो जलधि रखिलदिग्व्यापनो वः पुनातु ॥५४॥

सर्वदिग्व्यापिनमपरं सागरं प्रस्तौति-क्रत्वङ्गेत्यादि । जलधिः सागरः वः युष्मान् पुनातु पावयतु ॥ क्रतुः सगरचक्रवर्तिनोऽश्वमेध-

यागः तस्य अङ्गम् अवयवभूतः त्वङ्गन् चरन् योऽश्वः तुरगः तस्य व्यपगमः अपनयनं तेन कृता तज्जनितेत्यर्थः । रुट् कोपः येषां ते च ते सागराः सगरचक्रवर्तिपुत्राः । अपत्यस्येदन्त्वेन विवक्षया तस्येदमित्यण् । तेषामुद्दण्डाः दीर्घाश्च ता बाहाः बाहवो दण्डा इव। बलिष्ठा इति भावः । उपमा । तैः उत्खातम् अवदारितं यद् भूतलं भूप्रदेशः तस्य विवरं बिलं तस्य समाक्रान्तिः परित आक्रमणं तया संवर्धितः आत्मा देहो यस्य स तथोक्तः । श्रीदेव्या लक्ष्म्याः जन्मभूमिः जननस्थानं जनक इति यावत् । भुवः भूदेवतायाः वस्त्रं क्ष्माधराणां पर्वतानां मैनाकादीनां शरण्यः रक्षिता । पुण्येन सुकृतेन अगण्यः इयत्ताशून्यः प्रभावः महत्त्वं माहात्म्यं यस्य स तथोक्तः । अखिलाः समस्ताश्च ता दिशः तासां व्यापनः सकलदिग्व्यापकः । बाहुलकात् कर्तरि ल्युट् । वः युष्मान् पुनातु पावयतु ॥

श्रीमद्रामायणे बालकाण्डे सर्गः ११. सोपाध्यायवचः श्रुत्वा तस्मिन्सदसि पार्थिवः । षष्टिं पुत्रसहस्राणि वाक्यमेतदुवाच ह ॥ गतिं पुत्रा न पश्यामि रक्षसां पुरुषर्षभाः । तद्गच्छत विचिन्वध्वं पुत्रका भद्रमस्तु वः ॥ सर्गः—१२. योजनायामविस्तारमेकैको धरणीतलम् । बिभिदुः पुरुषव्याघ्र वज्रस्पर्शसमैर्भुजैः ॥ सर्गः - १८. पितुर्वचनमासाद्य सगरस्य महात्मनः । षष्टिः पुत्रसहस्राणि रसातलमभिद्रवन् ॥ ततस्तेनाप्रमेयेण कपिलेन महात्मना । भस्मराशीकृताः सर्वे काकुत्स्थ सगरात्मजाः ॥ सर्गः - ४३. सप्तमी चान्वगात्तासां भगीरथरथं तदा । प्राया-

दग्रे महातेजा गङ्गा तञ्चाप्यनुव्रजत् ॥ प्रविवेश तलं भूमेर्यत्र ते भस्मसात्कृताः । सर्वलोकप्रभु र्ब्रह्मा राजानमिदमब्रवीत् ॥ सागरस्य जलं लोके यावत्स्थास्यति पार्थिव । सगरस्यात्मजास्सर्वे दिवि स्थास्यन्ति देववत् ॥ सर्ग-४५. विश्वामित्रवचः श्रुत्वा राघवस्सह लक्ष्मणः । विस्मयं परमं गत्वा विश्वामित्रमथाब्रवीत् ॥ अत्यद्भुतमिदं ब्रह्मन् कथितं परमं त्वया । गङ्गावतरणं पुण्यं सागरस्यापि पूरणम् ॥ श्रीमद्भागवते स्कं-९. अध्यायः ११. सगरश्चक्रवर्त्यासीत् सागरो (येन) यत्सुतैः कृतः ॥

द्रागङ्गसङ्गभाग्यात् त्रिजगदधिपतेः पुण्यतोया वहन्ती
गङ्गाऽगं गाहमाना जनदुरितवनीविष्व गङ्गारतुल्या ।
वेगं गाधेतराम्भस्स्वनितरतटिनीपूरगं गाढ माप्ता
स्वर्गं गाधाशतेडचा वितरतु समये सौभगं गायतां वः ॥ ५५ ॥

सगरप्रस्तावे गङ्गाप्रसङ्गाद्गङ्गां प्रस्तौति द्रागिति । गङ्गा भागीरथी गायतां स्तुवतां वः युष्माकं सौभगं भाग्यं वितरतु दद्यात् ॥

त्रिजगतां त्रयाणां लोकानाम् अधिपतेः प्रभोः सर्वेश्वरस्य अङ्गस्य देहस्य सङ्गात् स्पर्शात् पुण्यं पवित्रं तोयं जलं यस्यास्सा तथोक्ता । द्राक् आशु वहन्ती प्रवहन्ती अगं हिमवन्तम् । "शैलवृक्षावगौनगा" वित्यमरः । गाहमाना प्रविशन्ती जनानां दुरितानि पापान्येव वनी अटवी । मतभेदेन रूपकपरिणामौ । तस्याः विष्वक्

परितः। "परितः सर्वतो विष्व"गित्यमरः। सर्वतो व्याप्तः यः अङ्गारः अग्निः तेन तुल्या उपमेया। जनपापसर्वस्वध्वंसिनीति भावः। गाधेतराम्भस्सु अगाधोदकेषु इतराश्च तास्तटिन्यः नद्यः। "अथ नदी सरित्। तरङ्गिणी शैवलिनी तटिनी"त्यमरः। तासां पूराः प्रवाहाः तान् गच्छतीति इतरतटिनीपूरगः, स न भवतीति अनितरतटिनीपूरगः, तं गाढमतिमात्रं वेगं शीघ्रताम् आप्ता प्राप्ता इतरनदीवेगाऽतिशायिवेगवतीति भावः। गाधाशतैः अनन्तचरितैः ईड्या स्तवनीया गङ्गा भागीरथी समये जीवनकाले सौभगं भाग्यं क्षेमं वा अनन्तरं स्वर्गं नाकं च गायतां स्तुवतां वः युष्माकं शेषत्वविवक्षया षष्ठी। वितरतु ददातु।

श्रीमद्रामायणे बालकाण्डे सर्गः ४३. देवदेवे (ब्रह्मणि) गते तस्मिन्सो (भगीरथः) ऽङ्गुष्ठाग्रनिपीडिताम्। कृत्वा वसुमतीं राम वत्सरं समुपासत॥ अथ संवत्सरे पूर्णे सर्वलोकनमस्कृतः। उमापतिः पशुपती राजानमिदमब्रवीत्॥ प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि तव प्रियम्। शिरसा धारयिष्यामि शैलराजसुतामहम्॥ ततो हैमवती ज्येष्ठा सर्वलोकनमस्कृता। तरसाऽतिमहद्रूपं कृत्वा वेगं च दुस्सहम्॥ आकाशादपतद्राम शिवे शिवशिरस्युत। शिवपुराणे विद्येश्वरसंहितायाम् अध्यायः १२. हिमवद्गिरिजा गङ्गा पुण्या शतमुखा नदी। तत्तीरे चैव काश्यादि पुण्यक्षेत्राण्यनेकशः॥ भारते अरण्यपर्वणि तीर्थयात्रापर्वणि अध्यायः ८५. सर्वं कृतयुगे पुण्यं

त्रेतायां पुष्करं स्मृतम् । द्वापरे तु कुरुक्षेत्रं गङ्गा कलियुगे स्मृता ॥
न गङ्गासदृशं तीर्थं न देवः केशवात्परः । ब्राह्मणेभ्यः परं नास्ति
एवमाह पितामहः ॥

**आमन्दस्यन्दमानाऽलसपवनलसत्तीरवानीर कुञ्ज-**
**क्रोडक्रीडद्यशोदासुतपदकमलन्यासधन्योपकण्ठा ।**
**क्षोणीवेणीयमाना जलचरविलसन्नीलवेणीमनोज्ञा**
**कालिन्दी सा मिलिन्दीमिलित कुवलयैरक्षता रक्षताद्वः ॥ ५६ ॥**

गङ्गाप्रस्तावातन्तरं तत्र सङ्गते यमुनासरस्वत्यौ क्रमशः प्रस्तौति—आमन्देत्यादि । कालिन्दी यमुना वः युष्मान् रक्षतात् पातु । आमन्दम् ईषन्मन्दं यथा तथा मन्दमन्दं स्पन्दमानः प्रसरन् अलसः मन्दो यः पवनः वायु तेन लसन्तः क्रीडन्तः "लसक्रीड-नलसनयोः । ये वानीराः वञ्जुलाः "शीतवानीरवञ्जुला" इत्यमरः । तेषां कुञ्जाः निकुञ्जाः "निकुञ्जकुञ्जौ वा क्लीबे लतादि पिहितोदरे " इत्यमरः । तेषां क्रोडे उत्सङ्गे मध्य इत्यर्थः । क्रीडन खेलन् यो यशोदातनयः श्रीकृष्णः तस्य पदे एव कमले तयोः न्यासैः निक्षेपणैः धन्यः उपकण्ठः समीपप्रदेशः यस्याः सा तथोक्ता । क्षोण्याः भूमेः वेणीवाऽऽचरन्तीति वेणीयमाना । "कर्तुः क्यङ् सलोप" श्चेति क्यङन्ताल्लटः शानच् मुमागमः । नीलरूप-त्वात्क्षोणीवेणीवस्थिता (उपमा) जलचरैः जलजन्तुभिः विलसन्ती प्रकाशमाना या नीलवेणी नीलवर्ण प्रवाह एव नीलजटा । श्लिष्ट-

रूपकम् । तया मनोज्ञा मनोहरा मिलिन्दीभिः भ्रमरीभिः मिलितानि च तानि कुवलयानि नीलोत्पलानि तैः अक्षता अजिता ततोऽपि नीलवर्णत्वात्, यद्वा तैर्युतत्वादप्राप्तवर्णभङ्गा कालिन्दी यमुनावः युष्मान् रक्षतात् पायात् ॥

पाद्मे पातालखण्डे अध्यायः ७. श्रीभगवानुवाच—पञ्चयोजनमेवं हि वनं मे देहरूपकम् । कालिन्दीयं सुषुम्नाख्या परमामृतवाहिनी ॥

वामनपुराणे—स्मरन् स तं महादेवस्तथोन्मादेन ताडितः । ततः पपात देवेशः कालिन्दीसरिते मुने ॥ निमग्ने शङ्करे चाप्सु दग्धा कृष्णत्वमागता । श्रीमद्भागवते स्कं १०. अध्यायः ३३—तास्समादाय कालिन्द्या निर्विश्य पुलिनं विभुः । विकचत्कुन्दमन्दार सुरभ्यनिलषट्पदम् ॥ ताभिर्विधूतशोकाभिः भगवानच्युतो वृतः । व्यरोचताऽधिकं तत्र पुरुषः शक्तिभिर्यथा ॥

योगिश्रेष्ठं वसिष्ठं द्रुतमुपतटमाक्रष्टुकामस्य पूर्वै-
र्विश्वामित्रस्य नेत्रद्युतिभिरिव रुषा रक्तिमाऽऽसक्तिमाप्ता ।
तच्छापस्येव भीतेरसितसितसरिद्वारि मध्ये निलीना
सिन्धुश्रेष्ठा सरस्व त्यघततिदलिनी सा पुन र्वः पुनातु ॥ ५७ ॥

योगिश्रेष्ठमिति ॥ सरस्वती सरस्वतीनदी वः युष्मान् पुनातु पावयतु ॥

अतिशयेन प्रशस्यः स्तोतव्यः श्रेष्ठः, योगिनां मुनीनां श्रेष्ठः अतिशयेन प्रशंसनीयः तं वसिष्ठम् अरुन्धतीपतिं द्रुतं शीघ्रम्। "लघुक्षिप्रमरं द्रुत"मित्यमरः। तटस्य तीरस्य समीपमुपतटं तीर-समीपप्रदेशं पूरैः प्रवाहैः रुषा कोपेन आक्रष्टुम् आकर्षणाय कामः इच्छा यस्य तस्य तथोक्तस्य। कृषविलेखने, तुमुन् अनुदात्तस्य चर्दुपधस्येत्या-दिना अमागमः। विश्वामित्रस्य कौशिकमहर्षेः। "मित्रे चर्षा"विति पूर्व-पददीर्घः। रुषा कोपेन नेत्रयोः अक्ष्णोः द्युतिभिः कान्तिभिरिवेति हेतू-त्प्रेक्षा। रक्तिम्नः रक्तवर्णस्य आसक्तिं समन्तात् सम्बन्धम् आप्ता प्राप्ता तस्य विश्वामित्रस्य। शेषत्वविवक्षया षष्ठी। भीतेः भया दिवेति हेतूत्प्रेक्षा। असिता च सिता च असितसिते ते च ते सरितौ तयोर्गङ्गायमुनयोः। पुंवत्कर्मधारयेति पुंवद्भावः। वारिणः उदकस्य मध्ये निलीना गूढा सिन्धूनां नदीनां श्रेष्ठा स्तवनीया उत्तमेत्येतन्। अघततीः पापसमूहान् दलयितुं नाशयितुं शीलमस्या इति तथोक्ता। पापजालविध्वंसिनी सरस्वती सरस्वतीनदी वः युष्मान् पुनातु पावयतु॥

स्कान्दे नागरखण्डे अध्यायः १७२. विश्वामित्रवसिष्ठौ तु सरस्वत्यास्तटे स्थितौ। अन्यस्मिन्नहनि सम्प्राप्ते विश्वामित्रेण सा नदी॥ समाहूता समायाता द्रुतं सा स्त्रीस्वरूपिणी। विश्वामित्र उवाच—यदा निमज्जनं कुर्या त्वव तोये महानदि। परमं वेगमा-स्थाय तदाऽऽनय ममान्तिकम्॥ सरस्वत्युवाच—नाहं द्रोहं करिष्यामि वसिष्ठस्य महात्मनः। विश्वामित्र उवाच—यस्मात्पापे वचो मम न

कृतं कुनदि त्वया । तस्माद्रक्तप्रवाहस्ते जलजोऽयं भविष्यति ।
एवमुक्त्वा कराच्चोयं सप्तवाराऽभिमन्त्रितम् ॥ चिक्षेपाथ जले तस्याः
क्रोधसंरक्त लोचनः । ततश्च तत्क्षणाज्जातं तच्चोयं रुधिरं द्विजाः ॥
सारस्वतं सुपुण्यं च यदासीच्छङ्खसन्निभम् । अध्यायः १७३.
कस्य चित्त्वथ कालस्य वसिष्ठो मुनिसत्तमः । अर्बुदस्थः तथा
प्रोक्तो दीनया दुःखयुक्तया ॥ तवार्थाय मुने शप्ता विश्वामित्रेण
कोपतः । तस्मात्कुरु प्रसादं मे यथा स्यात्सलिलं पुनः ॥
प्रवाहे मम विप्रेन्द्र प्रयाति रुधिरं क्षयम् । वसिष्ठ उवाच—
तथा भद्रे करिष्यामि यथा स्यात्सलिलं पुनः । प्रवाहे तव
निर्याति सर्वं रक्तं परिक्षयम् ॥ एवमुक्त्वा सविप्रर्षिरवतीर्य धरातले ।
गतः प्लक्षतरुं यस्मादवतीर्णा सरस्वती ॥ वारुणेन तु मन्त्रेण वीक्ष-
यन्वसुधातलम् । ततो निर्भिद्य वसुधां भूरि तोयं विनिर्गतम् ॥
रन्ध्रद्वयेन विप्रेन्द्रा लोचनाभ्यां निरीक्षणात् । एकस्य सलिलं क्षिप्रं
यत्र जाता सरस्वती ॥ प्लक्षमूले ततस्तस्य वेगेनापहृतं बलात् ।
द्वितीयस्तु प्रवाहो य स्सम्भ्रमात्तस्य निर्गतः । सा च सा श्रमती नाम
नदी जाता धरातले ॥

भक्त्युद्रेकप्रहृष्यत्तटनिकट नटद्बाणपूजावसान-
व्याकीर्णस्थाणुलिङ्गप्रकरनिपतनस्फायदोङ्कारकुण्डा ।
बद्धा सा पश्चिमाब्धौ तटभुवि जपतां तत्क्षणात्सिद्धिदात्री
धन्या शीतांशुकन्या प्रभवतु समये शर्मदा नर्मदा वः ॥ ५८ ॥

नदीप्रस्तावा दादक्षिणसमुद्रनदीः क्रमशः प्रस्तौति:—भक्त्युद्रेकेत्यादि ॥ नर्मदा रेवा वः युष्मभ्यं समये उचितकाले शर्मदा सुखदा भवतु ॥

भक्त्युद्रेकः भक्त्यतिशयः तेन प्रहृष्यन् अतिशयेन तुष्यन् तटः तीरम् । "कूलं रोधः प्रतीरं च तीरं चापि तटं त्रिष्वि"त्यमरः । तस्य निकटे समीपे नृत्यंश्चासौ बाणो बाणासुरः तस्य पूजायाः स्वकृतशिवपूजायाः अवसाने अन्ते व्याकीर्णानां [प्रक्षिप्यमाणानां] स्थाणुलिङ्गानां शिवलिङ्गानां प्रकरः समूहः तस्य निपतनं पातः तेन स्फायत् वर्धमानम् । "स्फायी ओप्यायी वृद्धा" वित्यस्मात् आत्मनेपदादनुदात्तेत्वलक्षणमात्मनेपदमनित्यमिति परस्मैपदे लटश्शता । ओङ्कारकुण्डं तदाख्य कुण्डविशेषः यस्यां सा तथोक्ता । पश्चिमाब्धौ पश्चिमसागरे बद्धा सङ्गता पश्चिमसागरगामिनीत्यर्थः । तटभुवि स्वतीरप्रदेशे जपतां स्वेष्टमन्त्रजपं कुर्वतां सिद्धेः फलस्य दात्री दायिका जपतां तत्फलमाशु ददातीति भावः । धन्या कृतार्था शीतांशोः चन्द्रस्य कन्या पुत्रीति तथोक्ता । नर्मदा तन्नाम्नी नदी वः युष्माकम् समये उचितकाले शर्म सुखं ददातीति शर्मदा सुखदायिनी सती । अत्र निर्मदेत्यपपाठः । नर्मदा प्रीतिदेतिवा, श्रीमद्रामायणे बालकाण्डे ३२ तमे सर्गे त्रिंशश्लोके नर्मवर्धिनीति पाठं स्वीकृत्य श्रीगोविन्दराजः प्रीतिवर्धिनीति व्याचख्यौ । प्रभवतु प्रकर्षेणाऽस्तु ।

काशीखण्डे उत्तरार्धे अध्यायः ७४. रेवातीरे समैक्षिष्ट तीर्थं चामरकण्टकम्। महदायतनं पुण्यमोङ्कारस्यापि तत्र वै॥ स्कान्दे माहेश्वरखण्डे अध्यायः ३. नारद उवाच — विचरन् मेदिनीं सर्वां प्राप्तोहमाश्रमं भृगोः। यत्र रेवानदी पुण्या सप्तकल्पस्मरा वरा॥ यथा सा पिङ्गला नाडी देहमध्ये व्यवस्थिता। इयं ब्रह्माण्डपिण्डस्य स्थाने तस्मिन् प्रकीर्तिता॥ स्कान्दे आवन्त्यखण्डान्तर्गत रेवाखण्डे अध्यायः - २०. प्रदीप्तं सर्वतोदिक्षु दह्यते त्रिपुरं परम्। एवं दृष्ट्वा ततो बाणो दह्यमान उवाच ह॥ वरं शङ्करपादौ च शरणं यामि मूढधीः। आत्मना तु कृतं पापमात्मनैव हि भुज्यते॥ अहं पुनः समस्तैश्च दह्यामि सह साधुभिः। एवमुक्त्वा शिवं लिङ्गं कृत्वा तन्मस्तकोपरि॥ निर्जगाम गृहाच्छीघ्रं पावकेनावकुण्ठितः। हरं गद्गदया वाचा स्तुवन्वै शरणं ययौ॥ त्वत्कोपानलनिर्दग्धो यदि वध्योऽस्मि शङ्कर। त्वत्प्रसादान्महादेव मा मे लिङ्गं प्रणश्यतु॥ ईश्वर उवाच— न भेतव्यं न भेतव्य मद्यप्रभृति दानव। सौवर्णे भवने तिष्ठ मम पार्श्वेऽथवा पुनः॥ तृतीयं रक्षितं तस्य पुरं देवेन शम्भुना। ज्वालामालाकुलं चान्यत्पतितं धरणीतले॥ एकं तु पतितं तत्र श्रीशैले खण्डमुत्तमम्। द्वितीयं पतितं राजन् शैले ह्यमरकण्टके॥ मनसाऽपि स्मरेद्यस्तु भक्त्या ह्यमरकण्टकम्। चान्द्रायणाधिकं पुण्यं स लभेन्नात्र संशय.॥ अध्यायः—५६. भानुमत्याख्यराजपुत्रिकाचरिते—त्यक्त्वा गङ्गां तदा राज्ञी गता काष्ठां तु दक्षिणाम्। प्राप्ता सा सचिवैः सार्धं यत्र रेवा महा-

नदी ॥ समाः पञ्च स्थिता तत्र ओङ्कारेऽमरकण्टके । अध्यायः २९.
ओङ्कारशतसाहस्रैः पर्वतश्चाभिरक्षितः ॥

चञ्चद्वाचालवीचीनिचयपरिच योदञ्चदानन्दसान्द्र-
स्वच्छन्दक्रीडदच्छच्छदगण मधुराऽऽलापमेदस्विपूरा ।
अम्भोधेः सङ्गमाशां भृशमिव दधती सप्तधाकॢप्तधामा
गोदा गोदावरी सा भवतु भवभयच्छेदि नीच्छावशा द्वः ॥५९।

चञ्चदित्यादि—गोदावरी तन्नाम्नी नदी वः युष्माकं भवभ यच्छेदिनी संसारभयनाशिनी प्रभवतु अस्तुतराम् ॥ चञ्चन्त्यः चलन्त्यः ॥ वाचालाः अधिकं ध्वनन्त्यश्च । आलजाटजौ बहुभाषिणीत्यालच् । ता वीच्यः तरङ्गाः "भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचि"रित्यमरः ॥ तासां निचयानां समूहानां परिचयेन सम्बन्धेन उदञ्चन् वर्धमानः य आनन्दः सन्तोषः तेन सान्द्राः पूर्णाः स्वच्छन्दं स्वेच्छया क्रीडन्तः खेलन्तः ये अच्छच्छदाः हंसाः, "हंसास्तु श्वेतगरुत" इत्यमरः तेषां गणाः समूहाः तेषां मधुराः श्रव्याः ये आलापाः ध्वनयः तैः मेदस्वी सान्द्रः परिपूर्णः पूरः प्रवाहो यस्याः सा तथोक्ता । अम्भोधेः सागरस्य सङ्गमः समागमः रतिरित्यर्थान्तरम् । तस्य तत्र वा आशा-तृष्णा तथोक्ता तां भृशम् अधिकं यथा तथा दधतीव धारयतीव । हेतू-त्प्रेक्षा । सप्तधा सप्तभिः प्रकारैः कॢप्ता रचिताः धावा गतयो यस्याः सा तथोक्ता । "धावु गतिशुद्ध्यो"रित्यस्माद्भावे घञ् । गां जलं स्वर्गं वा ददातीति गोदा । "आतोऽनुपसर्ग" इति कः । स्वर्गदा-

थिनी । गोदासु वरा श्रेष्ठा गोदावरी । गौरादित्वान्ङीष् । यद्वा गांजलं स्वर्गं च ददातीति गोदावरी तन्नाम्नी नदी । अन्येभ्योऽपि दृश्यन्त इति वनिप् । "वनोरच" ङीन्नादेशश्च । वः युष्माकम् इच्छावशात् भवतामिच्छानुरोधेन । यद्वा परप्रेरणां विना स्वेच्छयैव भवात् जननमरणरूपात्संसारात् यद्भयं तच्छेत्तुं शीलमस्येति तथोक्ता । संसारभयनाशिनी मोक्षदेति यावत् । प्रभवतु अस्तुतराम् ।

ब्रह्मवैवर्ते - १० - १२६ - १३०. गच्छन्तीं तीर्थयात्रायां ब्राह्मणीं रविनन्दनः । ददर्श कामुकः कान्तः पुष्पोद्यानेऽतिनिर्जने ॥ तया निवारितो यत्नात् कालेन बलवान् मुरः । अतीव सुन्दरीं दृष्ट्वा वीर्याधानं चकार सः ॥ द्रुतं तत्याज गर्भं सा पुष्पोद्याने मनोहरे । सद्यो बभूव पुत्रश्च तप्तकाञ्चनसन्निभः ॥ सपुत्रा स्वामिनो गेहं जगाम व्रीडिता तदा । स्वामिनं कथयामास यन्मार्गे दैवसङ्कटम् ॥ विप्रो रोषेण तत्याज तं च पुत्रं स्वकामिनीम् । सरिद्बभूव योगेन सा च गोदावरी स्मृता ॥ सप्तगोदावरम् — ब्रह्मपुराणे गौतमीमाहात्म्ये अध्यायः १०९. सप्तधा व्यभजन्गङ्गामृषयस्तत्र नारद । वासिष्ठी दक्षिणा च स्याद्वैश्वामित्री तदुत्तरा ॥ वामदेव्यपरा ज्ञेया गौतमी मध्यमा शुभा । भारद्वाजी परा ज्ञेया आत्रेयी तु ततोऽपरा ॥ जामदग्नी तु पाश्चात्या व्यपदिष्टा तु सप्तधा । अध्यायः ११३. गोदायाः सङ्गमः प्रोक्तः सङ्गमस्सरितां पतौ । तुल्याऽऽत्रेयी भरद्वाजी गौतमी वृद्धगौतमी ॥ कौशिकी चैव वासिष्ठी सप्तभागाः कृताः पुरा । तेषां नामानि मुनिभिर्निर्दिष्टानि

स्वनामभिः ॥ षड्भिर्भागैः फलैस्तुल्या स्वसामर्थ्यात्समागता
प्रविष्टा सागरे तेन तुल्यभागेति कीर्तिता ॥

फुल्लत्कल्हारनीलोत्पलकमलवनीकालनिर्भिन्नगर्भ
प्रोदञ्चच्चञ्चरीकीनिचयरुचिभर स्थापिताऽन्वर्थनामा ।
पात्रे नित्यार्पितश्री र्बहुतरसुकृतैः शान्तसिष्णासुतृष्णा
कृष्णा पुष्णातु कामा नविरतमपि वो राजहंसावतंसा ॥ ६० ॥

फुल्लदित्यादि—कृष्णा तन्नामा नदी सह्याद्रिसम्भूता वः युष्माकं कामान् वाञ्छितानि पुष्णातु पूरयतु ॥ फुल्लन्ति विकसन्ति कल्हाराणि सौगन्धिकानि । "सौगन्धिकन्तु कल्हार"मित्यमरः । नीलोत्पलानि कमलानि च तेषां वनी अल्पाटवी । "स्त्री स्यात्काचिन्मृणालाऽऽदिर्विवक्षाऽपचये यदी"त्यमराद्वनशब्दस्य स्त्रीत्वम् । गौरादित्वात् बह्वादित्वाद्वा ङीष् । तस्याः काले तत्तदुचितसमये निर्भिन्नाः विकसिता ये गर्भाः अन्तर्भागाः तेभ्यः प्रोदञ्चन्त्यः उच्चलन्त्यश्च ता श्चञ्चरीक्यः रोलम्ब्यः । "इन्दिन्दिरश्चञ्चरीको रोलम्ब" इत्यमरः । तासां निचयः समूहस्तस्य रुचिभरेण कान्त्यतिशयेन स्थापितं स्थिरीकृतम् । अर्थस्य योग्यमन्वर्थम् अर्थानुसारि । यथार्थे योग्यतारूपे, अव्ययं विभक्तीत्यादिना समासः । नाम यस्याः सा तथोक्ता । बहुतरसुकृतैः अनन्तपुण्यैः अनन्तपुण्यप्रदानेनेत्यर्थः । पात्रे प्रतिग्रहणयोग्ये भक्ते नित्यं सर्वदा, यद्वा नित्या शाश्वती अर्पिता न्यस्ता दत्तेत्यर्थः । श्री. स्वर्गभाग्यं यया सा तथोक्ता । बहुतर-

सुकृतैरित्येतन्मध्यमणिन्यायेनोत्तरत्राप्यन्वेति । शान्ता शमिता अन्तर्भावितण्यर्थः । स्नातुमिच्छवः सिष्णासवः । ष्णा औच इत्यस्मात् सन्नन्तात् "सनाशंसभिक्ष उ"रित्युः । तेषां तृष्णा पिपासा मोक्षकांक्षा यया सा तथोक्ता । विषयतृष्णाशमनेन वैराग्यप्रदा वा । राजहंसा अवतंसः हंसविशेषाः शिरोभूषणं यस्याः सा । "राजहंसास्तु ते चन्चुचरणैर्लोहितैः सिता" इत्यमरः । इन्द्रकीलाद्रावर्जुनस्तपश्चचारेति भारताद्राजहंसानामर्जुनादीनां तपस्थानभूतेत्यपि व्यज्यते । कृष्णा कृष्णानदी वः युष्माकं कामान् वाञ्छितानि अविरतमपि सदापि पुष्णातु पूरयतु ।

सूतसंहितायां शिवमाहात्म्ये अध्यायः १३. कृष्णवेणीति या लोके प्रोक्ता विप्रा महानदी । सर्वयोगीश्वराराध्या सह्यादेवोद्गता शुभा ॥ इन्द्रकीलगिरिर्यस्यां स्नात्वाऽभू च्छङ्करासनम् । नित्यं यस्यां महादेवः स्नात्वा विष्ण्वादिभिः सह ॥ तस्मिन् गिरिवरे श्रीमान् वर्तते शिवया सह । स्नात्वा तस्यां नरः पर्वण्युपोष्य ब्रह्मवित्तमाः ॥ यथाशक्ति धनं दत्वा मुच्यते भवबन्धनात् ॥

नित्यं हारिद्रभूरिद्रवकृतनिबिडोद्वर्तनाऽऽनर्तनोच्चै-
र्निश्चोलीभूत चोलीकठिन कुचतटाऽऽघट्टनोत्कर्णिता या
शृङ्गारोत्तुङ्गरङ्गप्रभुवरमभितो वैजयन्तीव भान्ती
धन्या सह्याद्रिकन्या विरचयतु शुभं सर्वदा सर्वदा वः ॥६१॥

नित्यमिति ॥ सह्याद्रेः सह्यपर्वतस्य कन्या कुमारी सह्योद्भवा कावेरीनदी वः युष्माकं शुभं कल्याणं सर्वदा सदा विरचयतु करोतु ॥

या कावेरी नित्यं सदा। व्यस्तप्रयोगश्चिन्त्यः। यद्वा उत्तरत्रान्वयः। हारिद्रस्य काञ्चनीसम्बन्धिनः "काञ्चनी पीता हरिद्रे"-त्यमरः। भूरिद्रवेण अधिकरसेन कृतानि निबिडानि सान्द्राणि यानि उद्वर्तनानि उत्सादनानि। "उद्वर्तनोत्सादने द्वे समे" इत्यमरः। तैः तज्जानीत्यर्थः। यान्यानर्तनानि समन्तान्नटनानि तैरुच्चैर्निश्चोलीभूताः ऊर्ध्वं निरस्तकञ्चुका ये चोलीनां चोलदेशस्त्रीणां कठिनाः कुचतटाः वक्षोजप्रदेशाः पार्श्वा वा तेषामाघट्टनानि आघाताः तैरुत्कर्णिता वृद्धिं गमिता ऊर्ध्वं प्रसृता वा। उत्कर्षितेति पाठ उचितः। तदाप्ययमेवार्थः। शृङ्गारेण उत्तुङ्गः उन्नतः शृङ्गाररसिकाग्रणीरिति भावः। तादृशा यो रङ्गप्रभुः श्रीरङ्गनायकः तमभित परितः वैजयन्ती श्रीमहाविष्णुना धार्यमाणमालाविशेष इव। उपमा। भान्ती प्रकाशमाना; धन्या कृतकृत्या पुण्यवती वा। यतः श्रीरङ्गनायकस्याऽलङ्कारभूता। सर्वं शुभं ददातीति सर्वदा। "आतोऽनुपसर्गे कः" इति कः। सह्याद्रिकन्या सह्याद्रिसमुद्भवा कावेरीत्यर्थः। सा वः युष्माकं कल्याणं शुभं सर्वदा सदा विरचयतु करोतु ददात्वित्यर्थः। नित्यंशुभं मोक्ष मितिवा।

श्री शिवपुराणे विद्येश्वरसंहितायाम्—अध्यायः - १२. सह्याद्रिजा महापुण्या कावेरीति महानदी। तत्तीराः स्वर्गदाश्चैव ब्रह्मविष्णुपदप्रदाः॥ शिवलोकप्रदाः शैवास्तथाऽभीष्टफलप्रदाः॥

ऐश्वर्योद्दण्डपाण्ड्य स्मयहरणकृते भक्षिताऽन्नक्षमाभृत्
क्षुत्क्षामक्षामकुक्षिप्रबलजनिततृट्क्षोभकुम्भोदरस्य ।
स्फारोदन्यानिवृत्त्यै दरविवृतजटाजूटतः शम्भुमुक्ता
भूयाद्भूत्यै प्रवृत्ता परिमधुरमियं वेगवत्यापगा वः ॥ ६२ ॥

ऐश्वर्योद्दण्डेत्यादि—वेगवत्यापगा वेगवतीनदी वः युष्माकं भूत्यै ऐश्वर्याय भूयात् अस्तु ॥ ऐश्वर्येण सम्पदा उद्दण्डः अधिको यः पाण्ड्यः पाण्ड्यदेशाधीश्वरः तस्य स्मयः गर्वः । तस्य हरणकृते अपहरणाय भक्षितः भुक्तः अन्नक्षमाभृत् अन्नपर्वतः येन स च क्षुधा अशनायया क्षामक्षामः अत्यन्तकृशः यः कुक्षिः उदरम् तस्मिन् प्रबलम् अत्यधिकं यथा तथा जनितः जातः सुन्दरेश्वरेण जनितो वा तृट्क्षोभः पिपासाबाधा यस्य सचाऽसौ कुम्भोदरः सुन्दरेश-पार्षदः तथोक्तस्तस्य, यद्वा भक्षिताऽन्नक्षमाभृत् क्षुत्क्षामः कुक्षिः यस्य सः । प्रबलंजनितः क्षुत्क्षोभः यस्य सः । एतद्विशेषणत्रयविशिष्ट-श्चासौ कुम्भोदरः तस्य स्फारा अधिका । या उदन्या पिपासा "उदन्या तु पिपासा तृडि"त्यमरः । तस्या निवृत्त्यै निवारणाय दर-विवृतः ईषद्विवृतो यो जटाजूटः कपर्दः तस्मात् । तसिः । कपर्दात् शम्भुना सुन्दरेश्वरेण मुक्ता त्यक्ता तथोक्ता । परिमधुरं सर्वतो मधुरं यथा तथा प्रवृत्ता इयं वेगवती वेगवतीनाम्नी आपगा नदी । "स्रवन्ती निम्नगाऽऽपगे"त्यमरः । वः युष्माकं भूत्यै ऐश्वर्याय भूयात् भवतु ॥

शिवपुराणे विद्येश्वरसंहितायामध्यायः १२. ताम्रपर्णी वेगवती ब्रह्मलोकफलप्रदे। तयोस्तीरे हि सन्त्येव पुण्यक्षेत्राण्यनेकशः॥ हालास्यमाहात्म्ये अध्यायः ११. भर्तारमुपसङ्गम्याऽथ सुविनीता सुमध्यमा। वाचा मधुरया प्राह देवी देवं तटातका। (मीनाक्षी) मुनीन्द्राद्याश्च ते सर्वे भुक्त्वेदानीं गता मुदा। अन्नं बहुविधं पक्वं स्वामिन् केभ्यः प्रदीयते॥ क्षणात्तदन्नमखिलं वैगन्ध्यं हि समावहेत्। तटातकावचः श्रुत्वा शङ्करः सोमसुन्दरः॥ कुण्डोदरं समालोक्य दहनं तस्य चौदरम्। सद्यः संवर्धयामास बडबानलसन्निभम्॥ भक्तराशिमशेषं च भक्षयामास तत्क्षणात्। सर्वाणि सद्यः सङ्गृध्वा किञ्चित्तृप्तिं च नाऽऽययौ॥ तटाकानां च वापीनां कूपादीनां च शम्बरम्। पीत्वाऽपि भूयस्तृषितो वारि वारीति शङ्करम्॥ भूतः सम्प्रार्थयामास भूतेशं सुन्दरेश्वरम्। स्वकपर्दस्थितां गङ्गां पवित्रां पापहारिणीम्॥ एवं प्राह महेशानो देवदेवस्त्रियम्बकः। महाप्रवाहरूपेण मदीये मधुरापुरे॥ समागच्छ महावेगात्सद्यस्त्वं लोकपावनि। इति देववचः श्रुत्वा गङ्गादेवी सरिद्वरा॥ महाप्रवाहवेगाभ्यां कूलघ्नी दृश्यते स्म सा। इति नद्या वेगवत्याः समुत्पत्तिः प्रकीर्तिता॥ तत्रैव सङ्गृहीतैतद्गाथः प्रार्थनाश्लोकः—भुक्त्वा तदन्नमखिलं कबलैश्चतुर्भिः कुण्डोदरे सपदि तत्र पिपासयाऽऽर्ते। आहूयते स्म वरवेगवतीप्रवाहो येनैव दाहशमनाय शिवः स बोऽव्यात्॥

स्वीयं हैयङ्गवीनद्रवमिव सलिलोत्पीडमाशूद्वहन्ती
रोधोरोहोद्यदुच्चक्षितिरुहपटली निष्पतत्पुष्पताम्रा ।
राज्ञो राज्ञो मनोज्ञा सकलजलपतेः सन्ततग्रामसीमाऽऽ
सन्ना षण्णामपि द्राग्दलयतु पटुतां तामरी तामरीणाम् ॥ ६३ ॥

स्वीयमिति । तामरी तन्नामा नदी युष्माकमितिशेषः । षण्णाम् अरीणाम् कामक्रोधादीनामन्तश्शत्रूणां पटुतां बाधनसामर्थ्यं द्राक् शीघ्रं दलयतु नाशयतु ॥ हैयङ्गवीनद्रवमिव सद्योघृतमिव । "तत्तु हैयङ्गवीनं यत्तु सद्यो गोदोहोद्भवं घृतम्" इत्यमरः । सद्योघृतसदृशं स्वीयं निजं सलिलोत्पीडम् उदकप्रवाहम् आशु शीघ्रम् उद्वहन्ती धारयन्ती रोधोरोहाः तटद्वयोत्पन्नाः उद्यन्तः ऊर्ध्वं गच्छन्तः वर्धमाना इत्यर्थः । ये क्षितिरुहाः वृक्षाः, क्षितौ रोहन्तीति क्षितिरुहाः । "इगुपधज्ञे"ति कः । तेषां पटली समुदायः तस्याः निष्पतन्ति यानि पुष्पाणि तैः ताम्रा रक्तवर्णा तथोक्ता । सकलजलपते राज्ञः सागरमहाराजस्य मनोज्ञा मनोहारिणी राज्ञी महिषी ॥ सन्तताः अविच्छिन्नाः । ग्रामसीमाः आसन्नाः समीपवर्तिन्यः यस्याः सा तथोक्ता । यद्वा ग्रामसीमानामासन्ना समीपवर्तिनी । अस्यास्तटयोः समीपे अविच्छिन्ना अग्रहारा बहवः सन्ति । एतादृशी तामरी तन्नामा नदी युष्माकमिति शेषः । तां प्रसिद्धां षण्णाम् अरीणां कामक्रोधादीनामन्तश्शत्रूणां पटुतां बाधनसामर्थ्यं द्राक् शीघ्रं दलयतु नाशयतु । इयं दक्षिणदेशे श्रीपद्मनाभक्षेत्रसमीपे वर्तते । अस्मिन् पद्ये "तामरीणामरीणा"मित्यनुपपन्नः पाठः । श्री श्री काञ्चीकामकोटिपीठाऽधीश्वरैः

श्री श्री चन्द्रशेखरेन्द्रसरस्वती स्वामिचरणैः "तामरी तामरीणा"मिति शोधितः। तामरशब्दस्य जलं धृतमित्यर्थद्वयम् अभिहितम्। तत्तामरपदार्थद्वयमनेन कविशेखरेण हैयङ्गवीनद्रवमिव सलिलोत्पीड-मिति सङ्गृहीतम्। अनेनैवार्थेन द्राविडभाषायां "नेय्यार्त कैर" इति सैषा नदी व्यवह्रियते॥

पायाद्वस्ताम्रपर्णी कलिभयरहिता दक्षिणा सा नदीनां
लोपामुद्राऽधिनाथ त्रिषवणविहित प्रत्यहस्नानपूता।
जायन्ते हन्त यस्याः किल जलनिधिना सङ्गमे पुण्यवेले
सद्वृत्ता एव मुक्ताः श्रुतिपरिचयिनो निर्मला भर्मलाभात् ॥६४॥

पायादिति—ताम्रपर्णी तन्नाम्नी नदी वः युष्मान् पातु रक्षतु॥ कलेः कलिकालाद्यद्भयं तेन रहिता शून्या तथोक्ता। कलिभयापहेत्यर्थः। सर्वासां नदीनां गङ्गादीनां मध्ये दक्षिणा दक्षिण-दिशास्थिता तथोक्ता पापहरणेऽतिकुशलेत्यर्थान्तरम्। लोपामुद्रा-धिनाथस्य अगस्त्यमहर्षेः त्रिषवणे प्रातर्मध्याह्नसायङ्कालेषु। आरुण-केतुकसायनभाष्ये ३२ तमे अनुवाके श्रूयते सोमोऽत्रेति सवनं, तत् त्रिविधं - प्रातर्मध्यन्दिनसायङ्कालभेदादिति। विहितानि कृतानि यानि अहन्यहनि प्रत्यहम्। "अव्ययं विभक्ती"त्यादिना यथार्थे वीप्सायामव्ययीभावः। "राजाहस्सखिभ्य" इति टच्। "तीर्थ-मृषिजुष्टजल" मित्यमरादगस्त्य महर्षिजुष्टत्वेनाऽऽस्याः पावनत्वमति-शयितमिति भावः। हन्तेति हर्षे। पुण्यवेले पावनसागरतटवति

पावनकालवतीत्यर्थान्तरम् । यस्याः ताम्रपर्ण्याः जलनिधिना सङ्गमे मेलके । "मेलके सङ्गसङ्गमा" वित्यमरः । नदीसागरदम्पतियोग इत्यर्थान्तरम् । सद्वृत्ताः अन्यूनातिरिक्तवर्तुलाऽऽकाराः । सच्चारित्रा इत्यर्थान्तरम् । वर्तुलं निस्तलं वृत्तमिति । "वृत्तं पद्ये चरित्रे चे"-त्यमरः । भर्मणः सुवर्णस्य । "स्वर्णं सुवर्णं कनकं गाङ्गेयं भर्म-कर्बुर"मित्यमरः । लाभात् प्राप्तेः सम्बन्धादित्यर्थः । सुखजीवन-योग्यधनलाभादित्यर्थान्तरम् । श्रुत्योः श्रवणयोः परिचयः सम्बन्धः एषामस्तीति तथोक्ताः । कर्णभूषाभूताः । श्रुतीनां वेदानां परिचयः तत्वज्ञानमेषामस्तीति तथोक्ताः इत्य र्थान्तरं । सर्वश्रुति रहस्यवेदिन इति भावः । "श्रुतिः श्रोत्रे च तत्कर्मण्याम्नायाऽवर्तयो"रिति निघण्टुः । सर्वजनश्रुतिपरिचयिनः प्रख्याता इत्यर्थान्तरं च प्रतीयते । निर्मलाः स्वच्छाः निष्पापा इत्यप्यर्थान्तरम् । मुक्ताः मुक्ताफलान्येव । जीव-न्मुक्ता एवेत्यर्थान्तरम् । जायन्ते उत्पद्यन्ते । प्रकृतश्लेषः । सा ताम्रपर्णी तन्नामा नदी वः युष्मान् पायात् रक्षतात् ॥

शिवपुराणे विद्येश्वरसंहितायामध्यायः १२. ताम्रपर्णी वेग-वती ब्रह्मलोकफलप्रदे । तयोस्तीरे हि सन्त्येव क्षेत्राणि स्वर्गदानि च ॥

**मेरुर्भास्वन्नमेरु स्स भवतु भवतां कल्यकल्याणदायी**
**तुङ्गैः सद्रत्नश्रृङ्गैरनुपहति जगद्रत्नदीपायमानः ।**
**विभ्राम्य न्यन्नितम्बेऽम्बरमणि रभितोऽप्यन्धकारेण साकं**
**दीव्यन्माणिक्यनीलोत्पलघटितवलच्चक्रशङ्कां करोति ॥ ६५ ॥**

नदीप्रस्तावानन्तरं तदुत्पत्तिहेतून्पर्वतविशेषान् प्रस्तौति मेरुरिति ॥ मेरुः स्वर्णगिरिः भवतां युष्माकं कल्यानि निर्दुष्टानि यानि कल्याणानि शुभानि तानि दातुं शीलमस्येति तथोक्तः। शुभप्रदाता भवतु ॥

भास्वन्तः कान्तिमन्तः नमेरवः वृक्षविशेषाः यस्मिन्स तथोक्तः। तुङ्गैः उन्नतैः सन्ति रत्नानि येषु तानि शिखराणि तैस्तथोक्तैः सद्रत्नमयशिखरैरिति वा। कूटोऽस्त्री शिखरं शृङ्ग"-मित्यमरः। न विद्यते उपहतिः उपद्रवः नाशो वा येषां ते अनु-पहतयः ये जगतां भुवनानां रत्नानि मणय एव दीपाः ते इवाऽऽचरन् तथोक्तः। लोकानामनश्वरदीप इवाऽऽचरन्। कर्तुः क्यङ्सलोपश्चे"ति क्यङ् लट् शानच्। उपमा। यस्य मेरोः नितम्बः कटकः तस्मिन्। "कटकोऽस्त्री नितम्बोद्रे" रित्यमरः। अन्धकारेण साकं तमसा सह अभितः परितो भ्राम्यन् सञ्चरन् अम्बरमणिः सूर्यः माणिक्यानि सिंहलजाताः रक्तमणिविशेषाः नीलोपलाः इन्द्रनीलमणयश्च माणिक्यनीलोत्पलाः। दीप्यन्तो ये माणिक्यनीलोपलाः तैः घटितं ग्रथितं वलत् भ्रमद्यच्चक्रं रथाङ्गं तस्य शङ्कां संशयं करोति जनयति। सन्देहालङ्कारः। प्रदक्षिणं कुर्वाणो रविर्मेरोर्यस्मिन् पार्श्वे वर्तते तत्ररक्तकान्तिः। सप्ताश्वोऽ-र्कोऽरुणरुचिरित्युक्तेः। अन्यस्मिन् पार्श्वेन्धकारः सूर्यस्यातिवेगगम-नात् तेजोऽन्धकारयोरपि महावेगेन भ्रमणं भवति। वेगेन भ्रमणा-

चक्राकारता चावश्यंभाविनी तथाचारुणकान्तिमत्सूर्यनीलतमसो र्माणिक्यनीलोपलघटितचक्रशङ्खाकरत्वेनाऽभ्यूहनं व्यनक्ति कवेरस्य महाकविबिरुदम् ॥

पायाद्वो मन्दराऽगस्तटनिकटगलद्गैरिकाऽमन्दरागः
प्रस्थैर्यो रत्नपूर्णैरुपरचित महार्घोपहारः शिवाय ।
दृप्यद्दैत्यामरेन्द्र प्रबलभुजबलाऽऽकृष्ट निर्घृष्टपिष्ट-
भ्राम्यद्गण्डोपलैर्योऽकृतकमठपतेश्चण्डकण्डूतिशान्तिम् ॥ ६६ ॥

पायादिति । मन्दरागः मन्दरनामकः पर्वतः वः युष्मान् पायात् रक्षतु ।

तटानां प्रपातानाम् । "प्रपातस्तु तटो भृगु" रित्यमरः । निकटात् समीपात् गलन्ति पतन्ति यानि गैरिकानि धातुविशेषाः तेषाम् अमन्दाः अधिका गाढा वा रागा वर्णा यस्य स तथोक्तः । रत्नैः पद्मरागादिभिः पूर्णा स्तैस्तयोक्तैः प्रस्थाः सानवः तैः । "स्नुः प्रस्थः सानुरस्त्रियाम्" इत्यमरः । शिवाय सदाशिवाय उपरचितः कृतः महार्घः अधिकमूल्यश्च य उपहारः येन स तथोक्तः । यद्वा उपरचितः कृतः महार्घस्य महतः पूजाविधेः । "मूल्ये पूजा-विधावर्घ" इत्यमरः । उपहारः सामग्री । "उपहारः पूजासाम-ग्री"ति सुधा । येन स तथोक्तः । दैत्याः दितिसुताः राक्षसाः अमरेन्द्राः देवताश्रेष्ठाश्च दैत्याऽमरेन्द्राः । दृप्यन्तश्च ये दैत्यामरेन्द्राः तेषां प्रबला अधिकबला ये भुजाः बाहवः तेषां बलेन यावदा-

मित्यर्थः । आकृष्टाः निर्घृष्टाः परस्परसङ्घर्षणं प्रापिताः पिष्टाः पिण्डी-
कृताः आभ्यन्तश्च ये गण्डोपलाः पृथुपाषाणाः तैर्यः मन्दरपर्वतः
कमठपतेः आदिकूर्मस्य कण्डूतेः गात्रविघर्षणस्य शान्ति शमनमकरोत
कृतवान् स मन्दरागः मन्दरपर्वतः युष्मान् पायात् रक्षतु ॥

**श्रेयो भूयो विदध्यात्प्रथित महिमवा नोषधिप्रस्थनाथः**
**शैलानां सार्वभौम स्स जगति हिमवान् जन्मभूर्हैमवत्याः ।**
**पर्यन्ते यस्य दर्यन्तर गृहगतरागाऽन्धगन्धर्वनारी-**
**सङ्गीतैस्तुत्यदीयं सततमपि यशः प्रायशः ख्यायते च ॥ ६७ ॥**

श्रेय इति। हिमवान् तन्नामकः पर्वतः, पर्वताऽधिष्ठानदेवता।
युष्माकमिति शेषः। भूयः भूरि श्रेयः शुभं विदध्यात् कुर्यात् ददा-
त्वित्यर्थः ।

प्रथितः प्रख्यातः महिमा प्रभावः यस्य स तथोक्तः। ओष-
धिप्रस्थस्य तन्नामकनगर्याः नाथः प्रभुस्तथोक्तः। जगति भूलोके
शैलानां पर्वतानां सार्वभौमः चक्रवर्ती । "हिमालयोऽद्रिराज"
इत्यमरः। हैमवत्याः जन्मभूः जननस्थानं पितेत्यर्थः। यस्य हिम-
वतः पर्यन्ते प्रान्ते दरीणां कन्दराणामन्तरे मध्ये यानि गृहाणि
तानि गताः प्राप्ताः। द्वितीया श्रितेत्यादिना समासः। रागान्धाः
अप्रमेयाऽनुरागा या गन्धर्वनार्यः गन्धर्ववनिताः तासां सङ्गीतानि
गानानि तैस्तु त्यदीयं यदीयं यशः कीर्तिः सततं सदाऽपि प्रायशः

गीयते स हिमवान् तन्नामकः पर्वतः युष्माकमिति शेषः। भूयः भूरि श्रेयः शुभं विदध्यात् कुर्यात् ॥

प्रत्यासन्न प्रभिन्न त्रिदशपति करिग्रामणीवप्रलीला
दन्ताऽग्रोत्क्षिप्त सानुक्षितिविषमतट प्रस्खलद्भानुचक्रः ।
नाथं पाथोजिनीनां क्षणमिव च शिरोरत्न मुच्चै र्दधानः
श्रीमान् पूर्वाचलेन्द्रो मनसि चिरधृतानन्धकारान् धुनोतु ॥६८॥

प्रत्यासन्न इति ॥ पूर्वाचलेन्द्रः उदयपर्वतः युष्माकमिति शेषः। मनसि अन्तः करणे, चिरधृतान् चिरं बहुकालम् बहुषु जन्मसु धृतान् भृतान् अन्धकारान् अज्ञानानि धुनोतु नाशयतु ॥ प्रत्यासन्नः समीपवर्ती। प्रभिन्नः मत्तः। "प्रभिन्नो गर्जि(र्वि)तो मत्त" इत्यमरः। यः त्रिदशपतेः इन्द्रस्य करिग्रामणीः गजश्रेष्ठः ऐरावतः। ग्रामं स्ववशं नयतीति ग्रामणीः। सत्सूद्विषद्रुहेत्यादिना क्विप्। अग्रग्रामाभ्यां नयतेर्णो वाच्य इति णत्वम्। रूढ्या श्रेष्ठ इत्यर्थः। "ग्रामणीर्नापिते पुंसि श्रेष्ठेग्रामाधिप" इत्यमरः। तस्य वप्रलीलासु वप्रक्रीडासु दन्तयोः रदयोः अग्राभ्याम् उत्क्षिप्ता ऊर्ध्वं क्षिप्ता सानूनां प्रस्थानाम्। "स्नुः प्रस्थः सानुरस्त्रिया"मित्यमरः। या क्षितिः भूमिः तस्या विषमतटेषु निम्नोन्नत प्रदेशेषु प्रस्खलत् सञ्चलत् भानुचक्रं सूर्यरथचक्रं यस्मिन् स तथोक्तः। पाथोजिनीनां कमलिनीनाम्। [ ] "कबन्धमुदकं पाथ" इत्यमरः। पाथसि जातं पाथोजम्। सप्तम्यां "जनेर्डः" इति डः, टिलोपः। पाथोजान्यासां सन्तीति पाथोजिन्यः पद्मलता-

स्तासां नाथं पतिं सूर्यम् । अत्र नाथ इति प्रथमान्तपाठो ऽसङ्गतः । शिरोरत्नं शिरोभूषणमिव क्षणम् अल्पकालं, सूर्योदयसमये । कालाध्वनोरिति द्वितीया । उद्वहन् दधानः शिरसि धारयन् । श्रीमान् शोभायुतः पूर्वाचलेन्द्रः उदयगिरिवरः युष्माकमिति शेषः । मनसि अन्तःकरणे चिरधृतान् बहुजमभ्यो भृतान् अन्धकारान् अज्ञानानि वासनापरपर्यायान् दुस्संस्कारान् धुनोतु नाशयतु ॥

अन्तर्मग्नाऽर्धं बिम्बा ऽम्बरमणिकदनामन्दमन्देहवृन्द
ध्वंसे वज्रायमाणाऽञ्जलिपुट सलिलैरुन्मुखैर्वीक्ष्यमाणः ।
आबिभ्राणः प्रतीचीनिटलघटित गोरोचना बिन्दुमर्कं
सोऽयं वोऽस्तं समस्तं गमयतु दुरितस्तोममस्ताचलेन्द्रः ॥ ६९ ॥

अन्तर्मग्नेत्यादि । अस्ताचलेन्द्रः अस्ताद्रिवरः । युष्माकमिति शेषः । समस्तं सर्वं दुरितस्तोमं पापसमूहम् । "अंहो दुरितदुष्कृते" इत्यमरः । अस्तं गमयतु नाशयतु ॥ अन्तः अस्ताद्रेरन्तः मग्नं निमग्नम् । बिम्बस्यार्धम् अर्धं बिम्बम् । अर्धं नपुंसकमि''ति समासः । यस्य स चासौ अम्बरमणिः सूर्यः । "द्योमणिस्तरणि" रित्यमरः । तस्य (तेन साकं) कदने युद्धे अमन्दाः तीव्रा ये मन्देहाः तन्नामका राक्षसा वेदे प्रसिद्धाः तेषां वृन्दस्य समूहस्य ध्वंसः नाशः तथोक्तः तस्मिन् वज्रं वज्रायुधमिवाऽऽचरन्तीति वज्रायमाणानि यान्यञ्जलिपुट सलिलानि हस्तसम्पुटस्थोदकानि येषां तैः । "अञ्जलिस्तु पुमान्हस्तसम्पुटे कुडवेपिचे''ति मेदिनी । उन्मुखैः उन्नमित-

मुखैः द्विजैरिति शेषः। वीक्ष्यमाणः दृश्यमानः प्रतीच्याः पश्चिम-दिगङ्गनाया यन्निटलं फालं तत्र घटितः प्रथितः यो गोरोचनाबिन्दुः तं गोरोचनाबिन्दुसदृशमित्यर्थः। तिलकभूतमिति भावः। एव-म्भूतमर्कं सूर्यम् आबिभ्राणः वहन् सोऽयमस्ताचलेन्द्रः अस्तगिरिवरः वः युष्माकं समस्तं दुरितस्तोमं पापसञ्चयम् अस्तं गमयतु नाशयतु॥

**वैदेही लोभनेच्छारचितगिरिसरित्कन्दरावृक्षराजी**
**सम्पद्वावर्णन श्रीरघुपतिचरण न्यासधन्य प्रदेशः।**
**पायाद्वश्चित्रकूटः कुतुकिजनकजादत्त बैसाङ्कुराग्र-**
**ग्रासोपासन्नहंसी समुदय कलिताऽऽनन्दमन्दाकिनीकः॥७०॥**

वैदेहीत्यादि। चित्रकूटः भरद्वाजाश्रम समीपस्थः पर्वत-विशेषः वः युष्मान् पायात् रक्षतु।

वैदेह्याः जानक्याः लोभनम् अतिशयितासक्तिकल्पनं तस्य (तत्र) इच्छा काङ्क्षा तया रचितं कृतम्। गिरिश्चित्रकूटः सरितः तत्रत्या मन्दाकिन्यादयो नद्यः कन्दरा दर्यः। "दरी तु कन्दरो वास्त्री"त्यमरः। वृक्षराज्यः वृक्षपङ्क्तयः तासां सम्पदः समृद्धेः वर्णनं स्तुतिः येन सचासौ रघुपतिः श्रीरामचन्द्रः तस्य चरणयोः पादयोः न्यासैः निक्षेपणैः धन्याः पावनाः प्रदेशा यस्य स तथोक्तः। कुतुकं कुतूहलम्। "कुतुकन्तु कुतूहल"मित्यमरः अपूर्ववस्तुनि तृष्णेति भावः। तदस्या अस्तीति कुतुकनी। अत इनि ठनाविति मत्वर्थे इनिः। ऋन्नेभ्य इति ङीप्। सा चासौ जनकजा सीता-

देवी। पुम्वत्कर्मधारयेत्यादिना पुंवद्भावः। तया दत्तः वितीर्णः यो बिसानां मृणालानाम्। इमे बैसाः। "मृणालं बिस"मित्यमरः। तस्येदमित्यण्। ते चते अङ्कुराः। "अङ्कुरोऽभिनवोद्भिदी"-त्यमरः। त एव ग्रासाः कबलाः। "ग्रासस्तु कबलः पुमान्" इत्यमरः। तदर्थमुपासन्नाः समीपमागताः या हंस्यः हंसाङ्गनाः तासां समुदयः समूहः तेन कलितः सहितः। "कलिः कवीनां कामधेनुः। जनितो वा आनन्दः सन्तोषो यस्याः सा मन्दाकिनी तन्नामा नदी (नेयं गङ्गा) यस्य यस्मिन् वा स तथोक्तः। "नद्युत-श्चे"ति कप्। "न कपी"ति निषेधान्न ह्रस्वः। एतादृशश्चित्रकूटः भरद्वाजाश्रमसमीपस्थः पर्वतविशेषः वः युष्मान् पायात् रक्षतु। श्रीमद्रामायणे अयोध्याकाण्डे सर्गः ५४.

श्रीरामः—एकान्ते पश्य भगवन् आश्रमस्थानमुत्तमम्। रमते यत्र वैदेही सुखार्हा जनकात्मजा॥ भरद्वाजः—दशक्रोश इत-स्तात गिरिर्यस्मिन्निवत्स्यसि। महर्षि सेवितः पुण्यः सर्वतस्सुखदर्शनः॥ दीर्घकालोषित स्तस्मिन् गिरौ गिरिवनप्रियः। वैदेह्याः प्रियमाकांक्षन् स्वं च चित्तं विलोभयन्॥ अथ दाशरथिश्चित्रं चित्रकूटमदर्शयत्। भार्याममरसङ्काशः शचीमिव पुरन्दरः॥ न राज्याद्भ्रंशनं देवि न सुहृद्भिर्विनाभवः मनो मे बाधते दृष्ट्वा रमणीयमिमं गिरिम्॥ पश्येमम मचलं भद्रे नानाद्विजगणायुतम्। शिखरैः खमिवोद्विद्धैर्धातुमद्भि-र्विभूषितम् केचिद्रजतसङ्काशाः केचि त्क्षतजसन्निभाः। पश्य

विद्याधरस्त्रीणां क्रीडोद्देशान्मनोहरान् ॥ वैदेहि रमसे कच्चि चित्रकूटे मया सह । पश्यन्ती विविधान्भावान्मनोवाक्कायसंयुतान् ॥ केचित्क्षयनिभा देशाः केचिदुद्यान सन्निभाः ॥

दुर्गा जीवोपहार प्रकृतनरपशुप्रस्नुताऽस्रप्रवाह
प्लीहक्लोमाऽऽन्त्रमालापरिणतघनजम्बालसम्बाधभूमिः ।
तुङ्गाऽनेकस्वशृङ्ग प्रतिहतगतिक व्योमसञ्चारिलोको
विन्ध्यः पायादवन्ध्य प्रतिघकलशजाऽऽदेशमूर्धावतंसः ॥७१॥

दुर्गेत्यादि—विन्ध्यः तन्नामा पर्वतविशेषः युष्मानिति शेषः । पायात् रक्षतु ।

दुर्गाया विन्ध्यवासिन्या (तस्यै दीयमानः) जीवाः प्राणिन एव उपहारः उपायनम् । "उपायन मुपग्राह्यमुपहार" इत्यमरः । तत्र प्रकृताः प्रसक्ताः नराः मानवा एव पशवः आलम्बनीय प्राणिनः तेभ्यः प्रस्नुताः स्यन्नाः । "स्यन्नं रीणं स्नुतं स्रुत" इत्यमरः । अस्रप्रवाहाः रक्तप्रवाहाः । प्लीहानः कुक्षिवामपार्श्वस्थमांसखण्डाः । क्लोमानि उदर्यजलाशयाः अन्त्राणि पुरीततां मालाः । एताभिः परिणतः परिणामं प्राप्तः । घनः महान् यो जम्बालः पङ्कः तेन सम्बाधा सङ्कटा भूमिः यस्य स तथोक्तः । तुङ्गाः उन्नताः अनेके बहवः ये स्वशृङ्गाः स्वशिखराः तैः प्रतिहता प्रतिबद्धा गतिर्यस्य सः । व्योमसञ्चारिणां लोकः जनः यस्य स तथोक्तः । अवन्ध्यः प्रतिघः कोपः । "प्रतिघौ रुट्प्रतीघाता"विति हैमः । यस्य स

चासौ कलशजः अगस्त्यमहर्षिः तस्य आदेशः अवनत एवाऽऽस्वे-त्याज्ञा सैवाऽवतंसः शिरोभूषणं यस्य स तथोक्तः। गुरुभक्तः विन्ध्यः तन्नामा पर्वत विशेषः। युष्मानिति शेषः। पायात् रक्षतु। विन्ध्यवासिनीति काचन शक्तिरत्रास्तीति प्रसिद्धिः॥ विष्णुधर्मोत्तरे प्रथमखण्डे अध्यायः—१०. वेणा वैतरणी चैव नर्मदा च कुमुद्वती। तोया सेतुशिलाचैव विन्ध्यपादविनिस्सृताः॥ श्री काशीखण्डे अध्यायः—४. भरद्वाजमगस्त्य उवाच—कश्चिच्छैलो विन्ध्यनामा भानुमार्गावरोधकः। वर्धितः स्पर्धया मेरोस्तद्वृद्धिं त्वं निवारय॥ अगस्त्य :—साधयिष्यामि वः कार्यं विसर्ज्येति दिवौकसः॥

लोकेशीमेकवीरां धृतविनयभयं सेवितुं प्राप्तवद्भि-
र्निस्तन्द्रै र्निर्जरेन्द्रैरनुदिनमपि यः सान्द्रित स्वीयपादः।
दत्तात्रेयस्य विष्णोरपि च भगवतो नित्यमावासभूतः
सह्य स्स ह्यद्भुतश्रीः क्षितिभृदवतु व श्रोत्लरक्षासदक्षः॥ ७२॥

लोकेशीमिति। सह्यः तन्नामकः क्षितिभृत् पर्वतः वः युष्मान् अवतु रक्षतु।

एकवीरां तन्नामिकां लोकेशीं जगदीश्वरीं धृते विनयभये यस्मिन् कर्मणि तद्यथा भवति तथा सेवितुं सेवां कर्तुं प्राप्तवद्भिः आगतैः निस्तन्द्रैः अनलसैः निर्जरेन्द्रैः अमरश्रेष्ठैः दिने दिने अनुदिनं प्रति-दिनमपि सान्द्रिताः सम्बाधिताः स्वीयाः स्वकीयाः पादाः प्रत्यन्तपर्व-ता यस्य स तथोक्तः। "पादो मूलोऽस्रतुर्यांशाङ्घ्रिषु प्रत्यन्तपर्वत"

इति हैमः । भगवतः महात्मनः ॥ दत्तात्रेयस्य अनसूयासूनोः विष्णोः श्रीमन्नारायणस्य आवासभूतः निवासस्थलभूतः चोलस्य चोलदेशस्य रक्षायां रक्षणे असदृक्षः अनुपमः । "क्सोऽपि वाच्य" इति क्सः । अद्भुता आश्चर्यकरी श्रीः सम्पत् बहुमहानदीनामुत्पत्त्यादिरूपा यस्य स तथोक्तः । एतादृशः सह्यः तन्नामकः क्षितिभृत् पर्वतः वः युष्मान् अवतु रक्षतु ॥

विष्णुधर्मोत्तरे प्रथमखण्डे अध्यायः—१०. तुङ्गभद्रा सुप्रकारा बाह्या कावेरिका नदी । दक्षिणापथमध्यस्थाः सह्यपाद विनिस्सृताः ॥ मार्कण्डेयपुराणे अध्यायः ५७. माहेन्द्रो मलयस्सह्यश्शुक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैवात्र कुलाचलाः ॥ तापी पयोष्णी निर्विन्ध्या कावेरी प्रमुखा नदी । गोदावरी भीमरथी कृष्णवेण्यादिकास्तथा ॥ सह्यपादोद्भवा नद्यः स्मृताः पापभयाऽपहाः ॥

**होमार्थं कुम्भयोनेः प्रतिदिनमुपयातेध्मवाहादिशिष्य-**
**च्छिन्न श्रीखण्डखण्डप्रसृत परिमलाक्रान्त दिक्चक्रवालः ।**
**तातो वातार्भकाणा मवतु स मलयो वामनाऽवामनोद्य-**
**च्छुण्डादण्डावनम्रत्रुटितबहुजरच्चन्दनो नन्दनो वः ॥ ७३ ॥**

होमार्थमिति । मलयः तन्नामको दक्षिणदिशास्थपर्वतः वः युष्मान् अवतु रक्षतु ।

कुम्भयोनेः अगस्त्यमहर्षेः होमार्थं होमाय । दिने दिने प्रतिदिनम् । यथार्थे वीप्सायामव्ययंविभक्तीत्यादिना समासः ।

उपयाताः समीपमागताः इध्मानि वहन्तीति इध्मवाहाः, इध्मानां वाहा इति वा । समिधां वोढारः । ते आदिर्येषां ते शिष्याः छात्राः तैश्छिन्नाः द्वैधीकृता विदारिताः श्रीखण्डानां चन्दनवृक्षाणां खण्डाः शकलाः । "शकलः खण्डेऽस्त्री"त्यमरः । तेभ्यः प्रसृतः निर्गतः परिमलः सुगन्धः । "विमर्दोत्थे परिमलो गन्धे जनमनोहरे" इत्यमरः । तेन आक्रान्तं व्याप्तं दिक्चक्रवालं दिङ्मण्डलं येन स तथोक्तः । "चक्रवालन्तु मण्डल"मित्यमरः । वातार्भकाणां बालमारुतानां मलयमरुतां, तातः पिता । वामनस्य दक्षिणदिग्गजस्य अवामनः दीर्घः उद्यन् प्रयतमानश्च यः शुण्डा करिहस्तः दण्ड इव पटिष्ठ इत्यर्थः । शुण्डादण्डः तेन अवनम्राः अवनमिता इत्यर्थः । त्रुटिताः छिन्नाः बहवो जरन्तः जरां गच्छन्तः चन्दनाः चन्दनवृक्षाः यस्मिन् स तथोक्तः । नन्दनः आनन्दजनकः सः मलयः मलयपर्वतः वः युष्मान् अवतु रक्षतु ॥

सप्ताकूपार खेयाऽऽवलयित धरणी मण्डली धूर्वहाणां
सर्वक्षोणीभृतां यः कलयति परितश्चित्रवप्रप्रकारम् ।
यस्मिन्नारक्षरीत्या भ्रमति दिनकरः सिद्धगन्धर्ववाद्यैः
शैलेन्द्रश्चक्रवालस्स किल वितनुतां चक्रवर्ती श्रियं वः ॥ ७४ ॥

सप्ताऽऽकूपारेत्यादि । चक्रवालः लोकालोकपर्वतः वः युष्मभ्यं श्रियं सम्पदं वितनुतां ददातु ॥

सप्त च ते अकूपाराः समुद्राः। "समुद्रोऽब्धिरकूपार" इत्यमरः। त एव खेयं परिखा। "खेयं तु परिखे"त्यमरः। तेन आवलयितः समन्तादावृता या धरणीमण्डली भूमण्डलं, तस्याः धूर्वहाः भारवाहकास्तथोक्ताः। तेषां सर्वक्षोणीभृतां निखिलपर्वतानां यः परितः अभितः चित्रं चित्रवर्णं यद्वप्रं चयः मृद्राशिः। "चयो वप्र"मि त्यमरः। तस्य प्रकारं विधां कलयति भजति। यस्मिन् पर्वते दिनकरः सूर्यः आरक्षस्य रक्षकभटस्य रीत्या विधया सिद्धानां गन्धर्वाणां देवयोनिविशेषाणां वाद्यैः वीणावेणुमृदङ्गादिभिः भ्रमति परितो गच्छति। चक्रवर्ती गिरिसार्वभौमः चक्रवालः तन्नामकः स शैलेन्द्रः पर्वतश्रेष्ठः वः युष्मभ्यं श्रियं सम्पदं वितनुतां ददातु॥

देवीभागवते स्कं-८ अध्यायः १४. ततः पुरस्तादचलो लोकालोकेति नामकः। अन्तराले च लोकालोकयोर्यः परिकल्पितः॥ शुद्धोदात्परस्तात् लोकः सूर्यालोकवान्देशः। अलोकः तद्रहितो देशः। तयोर्विभागार्थं कल्पितः स लोकालोकाचलः। सूर्यादीनां ध्रुवान्तानां रश्मयो यद्वशादिह। अर्वाचीनाश्च त्रीन् लोकानातन्वानाः कदापि हि॥ पराचीनत्वभाजो हि न भवन्ति च नारद। तावदुन्नमनाऽऽयामः पर्वतेन्द्रो महोदयः॥ एतावान् लोकविन्यासोऽयं संस्थामानलक्षणैः। कविथिस्स तु पञ्चाशत्कोटिभिर्गणितस्य च॥ भूगोलस्य चतुर्थांशो लोकालोकाचलो मुने॥

ये चान्ये स्वर्णकूटत्रिककुद्वनिभृन्माल्यवत्पारियात्राः
प्रष्ठाः श्रेष्ठा गिरीणां सततवसतयस्सिद्धविद्याधराणाम् ।
तेऽमी चामीकराऽद्रेः सदृशगुणगणाः पावनाः पापजालं
दूरीकुर्वन्तु सर्वं तुहिनमिव हि वः पत्युरह्नां मयूखाः ॥ ७५ ॥

पर्वतानामनन्तत्वात्प्रातिस्विकप्रस्तावोऽसम्भवीति सामान्येन प्रस्तौति—ये चान्य इति । ते स्वर्णकूटाऽऽदिगिरयः वः युष्माकं पापजालं पापसमूहं दूरीकुर्वन्तु अपवाहयन्तु ॥ ये अन्ये इतरे स्वर्णकूटः त्रिककुद्वनिभृत् माल्यवान् पारियात्रश्च एतन्नामकास्तथोक्ताः । गिरीणां पर्वतानां प्रष्ठाः अग्रगामिनः श्रेष्ठाः प्रशस्यतमाः सिद्धा विद्याधराश्च देवयोनिविशेषाः तथोक्ताः । तेषां सततवसतयः शाश्वतनिवासस्थानानि । चामीकराद्रेः स्वर्णगिरेर्मेरोः सदृशास्तुल्याः गुणानां पावनत्वादीनां गणाः समूहा येषां ते तथोक्ताः । ते अमी स्वर्णकूटाऽऽदयः पर्वताः वः युष्माकं पापजालं पापसमूहं सर्वमपि अह्नांपत्युः सूर्यस्य मयूखाः किरणाः "किरणोस्रमयूखांशु गभस्तिघृणिघृष्णय" इत्यमरः । तुहिनमिव नीहारमिव । उपमाऽलङ्कारः । "अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिम"मित्यमरः । दूरीकरोतु अपवाहयतु । नाशयत्वित्यर्थः ॥

दिक्पालाऽऽद्यस्त्रजालं निखिलमपि बलाद्भक्षयित्वा क्षणेन
प्रोद्दण्डो यस्य दण्डो बलिनमपि तदाऽदण्डयद्गाधिसूनुम् ।
पीता पैतामहास्त्रोन्नतिरपि तपसा येन ताताधिकेन
श्रेष्ठोऽयं तापसानामवतु स भवतो योगनिष्ठो वसिष्ठः ॥ ७६ ॥

पावनता प्रसाङ्गात् पावनान् पावयितॄंश्य मुनीन् प्रस्तौति— दिक्पालेत्यादिना। वसिष्ठः तन्नामा महर्षिः भवतः युष्मान् अवतु रक्षतु॥ दिक्पालाः दिगधिपतयः इन्द्राऽदयः आदिर्येषां तेषाम्। अस्त्राणि ऐन्द्रब्रह्माद्यस्त्राणि तत्तन्मन्त्रमन्त्रणपुरसरं प्रयुज्यमाना आयुधविशेषाः तेषां जालं समूह निखिलं सकलमपि विश्वामित्रप्रयुक्तमित्यर्थः। बलात् योगतपोबलात् क्षणेन अल्पकालेन भक्षयित्वा भुक्त्वा ग्रसित्वा स्वान्तर्विलीनं कृत्वा इति यावत्। यस्य वसिष्ठस्य प्रोद्दण्डः महान् दण्डः ब्रह्मदण्डः। बलिनं देहबलशालिनमपि गाधिसूनुं विश्वामित्रम्। तदा वसिष्ठविश्वामित्रकलहसमये अदण्डयत् अशिक्षयत्। तपसा तातात् ब्रह्मणः अधिकः तथोक्तेन ब्रह्मणोऽप्यधिकतेजस्सम्पन्नेनेत्यर्थः। येन वसिष्ठेन पितामहस्य ब्रह्मण इदं पैतामहम्। तस्येदमित्यण्। ब्रह्मसम्बन्धि यदस्त्रं ब्रह्मास्त्रं तस्य उन्नतिः अधिक्यं तथोक्ता साऽपि पीता स्वान्तर्विलीनामकरोदित्यर्थः। तापसानां ब्रह्मर्षीणां श्रेष्ठः अत्यधिकः। योगः चित्तवृत्तिनिरोधः तत्र निष्ठा दीक्षा यस्य स तथोक्तः। सोऽयं वसिष्ठः वसिष्ठमहर्षिः भवतः युष्मान् अवतु अन्तर्बहिश्शत्रुभ्यो रक्षतु॥ श्रीमद्रामायणे बालकाण्डे सर्गः - ५६. एवमुक्तो वसिष्ठेन विश्वामित्रो महाबलः। आग्नेयमस्त्रमुद्दिश्य तिष्ठ तिष्ठेति चाब्रवीत्॥ ब्रह्मदण्डं समुद्यम्य कालदण्ड मिवापरम्। वसिष्ठो भगवान् क्रोधादिदं वचनमब्रवीत्॥ क्षत्रबन्धो स्थितोऽस्म्येष यद्बलं तद्विदर्शय। नाशयाम्यद्य ते दर्पं शस्त्रस्य तव गाधिज॥ क्व च ते क्षत्रियबलं

क च ब्रह्मबलं महत्। पश्य ब्रह्मबलं दिव्यं मम क्षत्रियपांसन ॥ तस्यास्त्रं गाधिपुत्रस्य घोरमाग्नेयमुत्तमम्। ब्रह्मदण्डेन तच्छान्तमग्ने र्वेग इवाऽम्भसा ॥ वारुणं चैव रौद्रं च ऐन्द्रं पाशुपतं तथा। एता-न्यस्त्राणि चिक्षेप सर्वाणि रघुनन्दन ॥ वसिष्ठे जपनां श्रेष्ठे तदद्भुत-मिवाभवत्। तानि सर्वाणि दण्डेन ग्रसते ब्रह्मणः सुतः ॥ तेषु शान्तेषु ब्रह्मास्त्रं क्षिप्तवान् गाधिनन्दनः। ब्रह्मास्त्रं ग्रसमानस्य वसिष्ठस्य महात्मनः ॥ त्रैलोक्यमोहनं रौद्रं रूपमासीत्सुदारुणम्। प्राज्वलद्ब्रह्मदण्डश्च वसिष्ठस्य करोद्यतः ॥ विधूम इव कालाग्निर्य-मदण्ड इवाऽपरः।

योऽदृश्यन्ती सुगर्भे कृतनिवसति रभ्यस्तनिःशेषविद्यो
यस्सत्यां सत्यवत्यां तनयमजनयल्लोक निर्व्याज बन्धुम्।
चक्रे यश्च स्मृतीर्दुष्कलिमलहतये वैष्णवं सत्पुराणं
रक्षोयज्ञस्य यष्टा स च मुनितिलको व्यासतातोऽवताद्वः ॥ ७७ ॥

ब्रह्मर्षिवरिष्ठस्य वसिष्ठस्य सन्ततिं प्रस्तौति—य इति। व्या-सस्य द्वैपायनस्य महर्षेः तातः जनक पराशरमहर्षिः वः युष्मान् अवतात् रक्षतु।

यः पराशरमहर्षिः अदृश्यन्त्याः शक्तिमहर्षेः धर्मपत्न्याः सुगर्भे पवित्रगर्भे कृता निवसतिः निवासो येन स तथोक्तः। अभ्य-स्ताः शिक्षिताः निश्शेषाः सकलाः विद्याः वेदवेदाङ्गादयः येन स तथोक्तः। मातृगर्भस्थ एव सकलविद्यापारङ्गतोऽभूदिति महर्षिभ्यो-

ऽस्य महत्त्वं व्यज्यते । यः पराशरमहर्षिः सत्यां पतिव्रतायां सत्यवत्यां तन्नाम्न्यां वसुकन्यकायाम् लोकानां समस्तभुवनानां निर्व्याजः निष्कपटो यो बन्धुः स तथोक्तः । तं तनयं सुतं व्यासमहर्षिम् अजनयत् असूत । यः पराशरमहर्षिः दुष्टं चेदं सौ कलियुगं तस्य तत्कृतस्येत्यर्थः । मलस्य पापस्य हतये नाशाय स्मृतीः पाराशरीं स्मृतिम् । श्लोकोद्देशेन बहुवचनप्रयोगः । "कलौ पाराशरी स्मृति"रित्यभियुक्तोक्तिः । वैष्णवं सत्पुराणं पावनं विष्णुपुराणं च चक्रे अरचयत् । रक्षोयज्ञस्य रक्षोघ्नयागस्य यष्टा याजकः । यजेस्तृच्, व्रश्चेति षत्वं ष्टुत्वम् । मुनितिलकः ऋषिश्रेष्ठः व्यासस्य द्वैपायनमहर्षेः तातः जनकस्तथोक्तः । स पराशरमहर्षिः वः युष्मान् अवतात् रक्षतु । महाभारते—१-१७६.

परासुस्सन् यतस्तेन वसिष्ठस्स्थापितो मुनिः । गर्भस्थेन ततो लोके पराशर इति स्मृतः ॥ महाभारते आदि पर्वणि चैत्ररथपर्वणि अध्यायः ७६. कल्माषपाद उवाच—शक्तिं नाम महाभागं वसिष्ठकुलवर्धनम् । अपगच्छ पथोऽस्माकमित्येवं पार्थिवोऽब्रवीत् ॥ अमुञ्चन्तन्तु पन्थानं तमृषिं नृपसत्तमः । जघान कशया मोहात्तदा राक्षसवन्मुनिम् ॥ त शशाप नृपश्रेष्ठं वासिष्ठः क्रोधमूर्छितः । हंसि राक्षसवद्यस्मात् पुरुषादो भविष्यसि ॥ ततः स नृपति श्रेष्ठो रक्षसाऽपहृतेन्द्रियः । शक्तिं तं भक्षयामास व्याघ्रः पशुमिवेप्सितम् ॥ स तान् शक्त्यवरान् पुत्रान्वसिष्ठस्य महात्मनः । भक्षयामास सङ्कुद्धः सिंहः क्षुद्रमृगानिव ॥ चक्रे चात्मविनाशाय बुद्धिं स मुनिसत्तमः । (वसिष्ठः)

भर्तुं न शक्यमित्युक्त्वा पुनरेवाश्रमं ययौ ॥ अथ शुश्राव सङ्गत्या वेदाध्ययननिस्वनम् । अनुव्रजति कोऽन्वेष मामित्येवाथ साऽब्रवीत् ॥ अदृश्यन्त्यहमित्येव सा स्नुषा प्रत्यभाषत । शक्तेर्भार्या महाभागा तपोयुक्ता तपस्विनी ॥ वसिष्ठ उवाच—पुत्रि कस्यैष साङ्गस्य वेदाध्ययननिस्वनः । पुरा साङ्गस्य वेदस्य शक्तेरिव मया श्रुतः ॥ अदृश्यन्त्युवाच—अयं कुक्षौ समुत्पन्नः शक्तेर्गर्भस्सुतस्य ते । समा द्वादश तस्येह वेदानभ्यस्यतो मुने ॥ एवमुक्तस्तया हृष्टो वसिष्ठः श्रेष्ठभागृषिः । अस्ति सन्तानमित्युक्त्वा मृत्याः पार्थ न्यवर्तत ॥

अध्यायः - ७४. आश्रमस्था ततः पुत्रमदृश्यन्ती व्यजायत । शक्तेः कुलवरं राजन् द्वितीयमिव शक्तिनम् ॥ परासु स्सन् यतस्तेन वसिष्ठः स्थापितो मुनिः । गर्भस्थेन ततो लोके पराशर इति स्मृतः ॥ अध्यायः - ८१. ईजे च स महातेजास्सर्ववेदविदां वरः । ऋषी राक्षस सत्रेण शाक्तेयोथ पराशरः ततो वृद्धांश्च बालांश्च राक्षसान्स महामुनिः । ददाह वितते यज्ञे शक्तेर्वधमनुस्मरन् ॥

विष्णुपुराणारम्भे—पराशरं मुनिवरं कृतपौर्वाह्णिकक्रियम् । मैत्रेयः परिपप्रच्छ प्रणिपत्याऽभिवाद्य च ॥ त्वत्तो हि वेदाध्ययनमधीतमखिलं गुरो । यन्मयं च जगद्ब्रह्मन् यतश्चैतच्चराचरम् ॥ लीनमासीद्यथा तत्र लयमेष्यति यत्र च । श्रोतुमिच्छाम्यहं सर्वं त्वत्तो वासिष्ठनन्दन ॥

श्रीपराशर उवाच—ततश्च प्राह भगवान् वसिष्ठो मे पितामहः । पुलस्त्येन यदुक्तं ते सर्वमेतद्भविष्यति ॥ इति पूर्वं वसिष्ठेन पुलस्त्येन च धीमता । यदुक्तं तत्स्मृतिं याति त्वत्प्रश्नादखिलं मम ॥ सोऽहं वदाम्यशेषं ते मैत्रेय परिपृच्छते । पुराणसंहितां सम्यक् तां निबोध यथातथम् ॥ विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम् । स्थितिसंयमकर्तासौ जगतोऽस्य जगच्च सः ॥

एकीभूताविशेषग्रहविविधवचोवेदराशे र्विवेक्ता
व्यत्यस्तप्राक्पुराण प्रवचनचतुरः केशवांशावतारः ।
आनेता स्वर्गतानामपि पुनरवनीं स्त्रीकृते कौरवाणां
पाराशर्योऽवताद्वः प्रणयनकुशलः पञ्चमस्यागमस्य ॥ ७८ ॥

एकीभूतेत्यादि । पाराशर्यः पराशरमहर्षिपुत्रः व्यासमहर्षिः वः युष्मान् अवतात् रक्षतु ॥

अनेकानि एकं सम्पन्नानि एकीभूतानि मिश्रितानीत्यर्थः । कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः अभूततद्भाव इति वक्तव्यम् । अस्य च्वावित्येकशब्दाकारस्येत्वम् । अत एव न विद्यते विशेषा-णाम् अवान्तरविभागानां ग्रहः ग्रहणं येषां तानि विविधानि बहुप्रकाराणि च वचांसि उक्तयः तद्रूपः वेदानां श्रुतीनां राशिः समूहः तस्य विवेक्ता ऋग्यजुस्सामादिभेदेन विभागकर्ता । व्यत्यस्तानि विपर्यस्तानि प्राञ्चि प्राचीनानि च यानि पुराणानि पुरा भवानि

प्राचीनानि पञ्चलक्षणलक्षितानि । "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्त-राणि च । वंशाऽनुचरितं चेति पुराणं पञ्चलक्षणम् ॥" तेषां प्रवचने प्रचारणे चतुरः कुशलस्तथोक्तः । केशवस्य श्रीमन्नारायणस्य अंशः भागभूतः अवतारस्तथोक्तः । "व्यासो नारायणो हरिः" । अवतारास्त्रिविधाः—आविर्भावावेशांशावतार भेदेन । तत्र रामकृष्णादयः आविर्भावातारा:, परशुरामादयः आवेशावतारा: व्यासादयः अंशावताराः । स्वर्गतानां स्वर्गं प्राप्तानामपि कौरवाणां भीष्मदुर्योधातादीनां स्त्रीकृते रुदन्तीनां तत्पत्न्यादीनामाश्वासनायेत्यर्थः । अवनीं भूमिं प्रति पुनरानेता स्वमहिम्ना पुनः आनीतवान् । पञ्चमाऽऽगमस्य वेदस्य भारतस्य प्रणयने रचनायां कुशलः निपुणः पराशरस्याऽपत्यं पुमान् पाराशर्यः पराशरात्मजो व्यासमहर्षिः वः युष्मान् रक्षतु । पराशरस्यापत्यं पुमान् पाराशर्यः । "गर्गादिभ्यो यञ्" इति यञ् । यद्यप्ययमनन्तराऽपत्यमेव, अथापि गोत्रत्वारोपाद्यञ् । रामो जामदग्न्य इतिवत् इति श्रीज्ञानेन्द्रसरस्वती श्रीचरणाः ॥

शिवपुराणे उमासंहिताया मध्याय:—४४ निषाद उवाच—
तापसोऽयं महाभागेऽदृश्यन्ती गर्भसम्भवः । तितीर्षुरस्ति धर्माब्धि श्चतुराम्नाय पारगः ॥ इति विज्ञापिता पित्रा मत्स्यगन्धा महामुनिम् । संवाहयति नौकायामासीनं सूर्यरोचिषम् ॥ कालयोगान्महायोगी

तस्यां कामातुरोऽभवत् । व्यवायचकिता सा तु पुनः प्रोवाच तं मुनिम् ॥ सगर्भा स्यां तदा स्वामिन् का गतिर्मेभवेदिति । पराचर उवाच—

शृणु प्रिये तवाभीष्टं सर्वं पूर्णं भविष्यति । विष्णवंशसम्भवः पुत्रो भविता ते महायशाः ॥ पुराणकर्ता पुत्रस्ते वेदशाखाविभागकृत् । भविष्यति वरारोहे ख्यातकीर्तिर्जगत्त्रये ॥ महाभारते आश्रमवासपर्वान्तर्गते....दर्शनपर्वणि अध्यायः— ३२. ततो निशायां प्राप्तायां कृतसायाह्निकक्रियाः । व्यासमभ्यगमन्सर्वे ये तत्राऽऽसन् समागताः । धृतराष्ट्रस्तु धर्मात्मा पाण्डवैः सहितस्तदा ॥ गान्धार्या सह नार्यस्तु सहितास्समुपाविशन् । ततो व्यासो महातेजाः पुण्यं भागीरथीजलम् ॥ अवगाह्याऽऽजुहावाथ सर्वान् लोकान्महामुनिः । पाण्डवानां च ये योधाः कौरवाणां च सर्वशः ॥ राजानश्च महाभागा नानादेशनिवासिनः । ततस्ते पार्थिवास्सर्वे भीष्मद्रोणपुरोगमाः ॥ ससैन्यास्सलिलात्तस्मात्समुत्तस्थुस्सहस्रशः । कर्णदुर्योधनौ चैव शकुनिश्च महारथः ॥ दुश्शासनादयश्चैव धार्तराष्ट्रा महाबलाः ॥ श्री मद्भागवते स्कं—१२. अध्यायः ६. सूत उवाच—अस्मिन्नप्यन्तरे ब्रह्मन् भगवान् लोकभावनः । ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥ पराशरात्सत्यवत्यामंशांशकलया विभुः । अवतीर्णो महाभागो वेदं चक्रे चतुर्विधम् ॥ ऋगथर्वयजुस्साम्नां राशीनुद्धृत्य सर्वशः । चतस्रः संहिताश्चक्रे सूत्रे मणिगणानिव ॥

सार्कं सेन्द्रं सचन्द्रं त्रिभुवनमपरं निर्मिमाणेन येन
त्रस्ता देवास्समस्तास्समजनिषत यच्चाटुकाकूक्तिवादाः ।
निर्वोढुं यः प्रतिज्ञां समजनि च हरिश्चन्द्रचन्द्रस्य राहुः
विश्वामित्रोऽपि मित्रीभवतु च भवतां विश्वमित्रायमाणः ॥ ७९ ॥

वसिष्ठमहर्षिप्रस्तावानन्तरं तत्प्रतिभटं विश्वामित्रं प्रस्तौति सार्कमिति । विश्वामित्रः तन्नामा गाधिसूनुः महर्षिः भवतां युष्माकं मित्रीभवतु सखा भवतु ।

अर्केण सहितं सार्कम् । इन्द्रेण सहितं सेन्द्रम् । चन्द्रेण सहितं सचन्द्रम् । अत्र सर्वत्र "तेन सहेति तुल्ययोग" इति बहुव्रीहिः । वोपसर्जनस्येति सहस्य सः । अपरं ब्रह्मसृष्टादन्यत् । निर्मिमीत इति निर्मिमाणः तेन सृजता । जुहोत्यादिस्थान्माङ् माने शब्दे चेत्यस्माद्धातोर्लटः शानच् । येन विश्वामित्रेण समस्ताः सर्वे त्रस्ताः भीताः देवाः । यस्मिन् विषये यमुद्दिश्येत्यर्थः । तदिति-पाठे तादृश्यः अत्यन्तं प्रियाः अत्यन्तं दीना इति उक्तीनां विशेषणम् । चाटवः प्रियाः काकवः दीनाश्च या उक्तयः वचनानि ता वदन्तीति तथोक्ताः । कर्मण्यण् । हे महर्षे भवान् तपस्विश्रेष्ठः अघटितघटनासमर्थः इत्यादिप्रियोक्तीः । वयं सर्वेऽपि आपन्नाः दीनानस्मान् दीनशरण्यो रक्षतु भवान् इत्यादिदीनोक्तीश्च भाषमाणाः समजनिषत कृताः । येन विश्वामित्रेण कारणेन देवा एतादृशा स्समजनिषत आसन्निति वा । अनेन ब्रह्मर्षित्वप्राप्तेः पूर्वमेवैषोऽतिको-

कप्रभाव इति सूच्यते । यो विश्वामित्रः प्रतिज्ञां "हरिश्चन्द्रं राजधर्मादपेतमसत्यवादिनं करिष्या"मीति शपथं निर्वोढुं पूर्तय इत्यर्थः । हरिश्चन्द्रः त्रिशङ्कुपुत्र एव चन्द्रः शशी तस्य राहुः सैंहिकेयस्तथोक्तः । हरिश्चन्द्रस्य बाधाजनक इति भावः । रूपकम् । सम्प्रजनि आसीत् । सः विश्वस्य जगतः अमित्रं शत्रुरपि विश्वमित्रायमाणः जगति स्नेहवान् सन् भवतां युष्माकं मित्रीभवतु अनुग्रहवान् भवतु । पूर्वोक्तप्रकारेण जगतामपकर्तापि भवत्स्वनुग्रहवान् भवतु इति विरोधः । वस्तुतस्तु विश्वस्य मित्रमित्येव तत्र समासः । "मित्रे चर्षा"विति पूर्वपदस्यदीर्घः । एवं विरोधपरिहाराद्विरोधाभासाऽलङ्कारः । श्री मद्रामायणे बालकण्डे सर्गः ६०.

स्वर्गलोकगतं दृष्ट्वा त्रिशङ्कुं पाकशासनः । सह सर्वैः सुरगणैरिदं वचनमब्रवीत् ॥ त्रिशङ्को गच्छ भूयस्त्वं नासि स्वर्गकृताऽऽलयः । एवमुक्तो महेन्द्रेण त्रिशङ्कुरपतत् पुनः ॥ विक्रोशमान स्त्राहीति विश्वामित्रं तपोधनम् । तच्छ्रुत्वा वचनं तस्य क्रोशमानस्य कौशिकः ॥ रोषमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत् । सृजन् दक्षिणमार्गस्थान् सप्तर्षीनपरान् पुनः ॥ नक्षत्रवंशमपरमसृजत्क्रोधमूर्छितः । दैवतान्यपि सक्रोधात्स्रष्टुं समुपचक्रमे ॥ ततः परमसम्भ्रान्तास्सर्षिसङ्घाः सुरासुराः । विश्वामित्रं महात्मानमूचुः सानुनयं वचः ॥ अयं राजा महाभाग गुरुशापपरिक्षतः । सशरीरो दिवं यातुं नार्हत्येव तपोधन ॥

मार्कण्डेयपुराणे सप्तमाध्याय:—हरिश्चन्द्र उवाच—दातव्यं विप्रमुख्येभ्यः ये चान्ये कृशवृत्तय: । विश्वामित्र उवाच–यदि राजा भवान् सम्यग्राजधर्ममवेक्षते । निर्वेष्टुकामो विप्रोऽहं दीयतामिष्ट-दक्षिणा ॥ हरिश्चन्द्र:—उच्यतां भगवन्यत्ते दातव्यमविशङ्कितम् । दत्तमित्येव तद्विद्धि यच्चापि स्यात्सुदुर्लभम् ॥ विश्वामित्र: – प्रयच्छ प्रथमं तावद्दक्षिणां राजसूयके । हरिश्चन्द्र: — ब्रह्मंस्तामपि दास्यामि दक्षिणां भवतोऽस्म्यहम् ॥ व्रियतां द्विजशार्दूल यस्तवेष्टः प्रतिग्रह: । विश्वामित्र:—ससागरां धरामेतां सभूभृद्ग्रामपत्तनाम् ॥ बहुनाऽत्र किमुक्तेन सर्वमेतत्प्रदीयताम् । हरिश्चन्द्रो महाराजस्तथेत्याह कृता-ञ्जलि: ॥ विश्वामित्र:—यत्र मे विषये स्वाम्यं तस्मान्निष्क्रान्तुमर्हसि । हरिश्चन्द्र:–हरिश्चन्द्रो महाभागो राजा गन्तुं प्रचक्रमे । विश्वामित्र:–क्व यास्यस्यसीत्यदत्वा मे दक्षिणां राजसूयके । हरिश्चन्द्र: भगवन्–साम्प्रतं नास्ति दास्ये कालक्रमेण ते ॥ मासेन तव विप्रर्षे प्रदास्ये दक्षिणाधनम् । अध्याय: - ४ स गत्वा वसुधापालो दिव्यां वाराणसीं पुरीम् ॥ पुरीप्रवेशे ददृशे विश्वामित्रमुपस्थितम् । विश्वामित्र:—

पूर्णस्स मासो राजर्षे दीयतां मम दक्षिणा । अथ वृद्धो द्विज: कश्चिदागत्याऽऽह नराधिपम् ॥ समर्पयस्व मे दासीमहं क्रेता धनप्रदः । गृह्यतां वित्तमेतत्ते दीयतां बालको मम ॥ विश्वामित्र-स्तत: प्राप्तो नृपं वित्तमयाचत । तस्मै समर्पयामास हरिश्चन्द्रोऽपि तद्धनम् ॥ विश्वामित्र:—क्षत्रबन्धो ममेमां त्वं सदृशीं यज्ञदक्षिणाम् ।

मन्यसे यदि तत् क्षिप्रं पश्य त्वं मे बलं परम् ॥ विश्वामित्रः—यदि प्रेष्यो मम भवान् चण्डालाय ततो मया । दासभावमनुप्राप्तो दत्तो वित्ताऽर्बुदेनवै ॥ एवं हरिश्चन्द्रचन्द्रं विश्वामित्रो राहुर्भूत्वाऽबाधत ॥

**सौर्वाग्नीन्सान्तरीपान्सशिखरिनिकरान्साच्युतां श्चान्ततो यः**
**सिन्धून्स्वल्पाम्बुबिन्दूनिव करकमलेऽधत्त तेजोमहिम्ना ।**
**जेता वातापिनाम्नः स्वयमसुरपते र्विन्ध्यसंस्तम्भकारी**
**क्लेशाम्भोधिं समस्तं स बत पिबतु वस्तापसः कुम्भजन्मा ॥**

ऋषिप्रसङ्गात् क्रमशः ऋषिमुख्यान् प्रस्तौति—सौर्वानिति । कुम्भजन्मा अगस्त्यनामा तापसः महर्षिः वः युष्माकं समस्तं सकलं क्लेशाम्भोधिं दुःखसमुद्रं पिबतु ॥

यः अगस्त्यमहर्षिः और्वाग्निना सहितान् तथोक्तान् । अन्तरीपैः द्वीपैः सहितान् तथोक्तान् । "ऋक्पूरब्धूः पथामानक्ष" इत्यप् समासान्तः । "द्व्यन्त रुपसर्गेभ्याऽप ई"दित्यप् शब्दाऽकारस्येकारः । शिखरिणः पर्वताः । तेषां निकरः समूहः । तेन सहितांस्तथोक्तान् । अन्ततः अन्ते । अच्युतेन श्रीमहाविष्णुना सहितांस्तथोक्तान् । सिन्धून् समुद्रान् । सीधूनिति मुद्रणप्रमादः । "सिन्धुर्वमथुदेशाब्धिनदेनासरिति स्त्रियाम्" इति मेदिनी । स्वल्पा ये अम्बुबिन्दवस्तानिव जलकणानिव । उपमा । तेजसः तपोजन्यपराक्रमस्य ब्रह्मतेजसो वा महिम्ना महत्त्वेन । करः हस्तः

कमलमिव पद्ममिवेत्युपमितसमासः। तस्मिन् अधत्त धृतवान्। वातापिरिति नाम यस्य स तथोक्तः। तस्यासुरपतेः राक्षसश्रेष्ठस्य स्वयम् अन्यसाहाय्य मनपेक्ष्येति भावः। जेता जितवान्। विन्ध्यस्य तन्नाम्नो दक्षिणदिक्स्थस्य पर्वतस्य स्तम्भः वृद्धिनिवारणं, तत्करोतीति तथोक्तः। सः तादृशमहिमान्वितः अगस्त्यस्तापसः अगस्त्यमहर्षिः। वः युष्माकम्। क्लेशा एव अम्भोधिः समुद्रस्तं पिबतु पानं करोतु। बतेत्यनुकम्पायाम्। "खेदानुकम्पा सन्तोष विस्मयाऽऽमन्त्रणे बते"त्यमरः। अनेनास्य कवीन्द्रस्य महती लोकानुकम्पा व्यज्यते। अगं विन्ध्यपर्वतं स्तभ्नातीति स्थापयतीति वा अगस्त्यः॥ देवीभागवते स्कन्धः - ३, ४, ५ - नारद उवाच—

यं पर्येति च विश्वात्मा सहस्रकिरणः स्वराट्। सग्रहर्क्षगणोपेतः सोऽयं कनकपर्वतः॥ आत्मानं मनुते श्रेष्ठं वरिष्ठं च धराभृताम्। गते मुनिवरे विन्ध्य श्चिन्तां लेभेऽनपायिनीम्॥ सग्रहर्क्षगणोपेतस्सदा दृप्यत्ययं नगः। तस्य मार्गस्य संरोधं करिष्यामि निजैः करैः। एवं निश्चित्य विन्ध्याद्रिः खं स्पृशन् ववृधे भुजैः। देवा ऊचुः—

प्रसादं क्रियतां स्वामिन् वयं त्वां शरणं गताः। दुस्तराच्छैलजाद्दुःखात्पीडिताः परमद्युते। काशीविरहसन्तप्तो महाभाग्यनिधिर्मुनिः॥ संस्मृत्यानुक्षणं काशीं जगाम सह भार्यया॥ चकम्पे चाचलस्तूर्णं दृष्ट्वैवाग्रे स्थितं मुनिम्। दण्डवत्पतितो भूमौ साष्टाङ्गं भक्तिभावितः॥ प्रसन्नवदनोऽगस्त्यो मुनिर्विन्ध्यमथाब्रवीत्।

वत्सैवं तिष्ठ तावत्त्वं यावदागम्यते मया ॥ मलयाऽचलमासाद्य तत्रा-श्रमपरोऽभवत् ॥ भारते अरण्यपर्वणि तीर्थयात्रापर्वणि अध्याय: ९६. लोमश:—इल्वलो नाम दैतेय आसीत्कौरवनन्दन । मणिपुर्यां पुरि पुरा वातापिस्तस्य चानुजः ॥ मेषरूपी च वातापिः कामरूप्यभवत् क्षणात् । संस्कृत्य भोजयति ततो विप्रं जिघांसति ॥ एवं स ब्राह्म-णान्राजन् भोजयित्वा पुनः पुनः । हिंसयामास दैतेयः स महादुष्टचे-तनः ॥ अगस्त्यश्चापि भगवान् स तस्मिन् काल एवतु । अग-स्त्योऽयाचत कांश्चित्तु प्राज्ञो राज्ञो महद्धनम् । राजान ऊचुः—

अयं वै दानवो ब्रह्म न्निल्वलो वसुमान्भुवि । तमभिक्रम्य सर्वेऽद्य वयं याचामहे वसु ॥ तेषां तदासीदुचितमिल्वलस्यैव भक्ष-णम् । तेषां ततोऽसुरश्रेष्ठस्त्वातिथ्यमकरोत्तदा ॥ सुसंस्कृतेन कौरव्य भ्रात्रा वातापिना तदा । अगस्त्य एव कृत्स्नं तु वातापिं बुभुजे ततः ॥ भुक्तवत्यसुरोऽह्वानमकरोत्तस्य चेल्वलः । तं प्रहस्याब्रवी-द्राजन्नगस्त्यो मुनिसत्तमः ॥ कुतो निष्क्रमितुं शक्तो मयाजग्धस्तु सोऽसुरः ॥ अध्यायः १०४. अगस्त्य: किमर्थमभियाताः स्थ वरं मत्तः किमिच्छथ । एवमुक्ता स्ततस्तेन देवता मुनिमब्रुवन् ॥ एवं त्वयेच्छामः कृत हि कार्यं महार्णवं पीयमानं महात्मन् । ततो वधि-ष्याम: सहानुबन्धान्कालेय संज्ञान् सुरविद्विषस्तान् ॥ अध्यायः १०५. मैत्रावरुणिः—

अहं लोकहितार्थं वै पिबामि वरुणालयम्। भवद्भिर्यदनुष्ठेयं तच्छीघ्रं संविधीयताम् ॥ एतावदुक्त्वा वचनं मैत्रावरुणिरच्युतः। समुद्रमपिबत्क्रुद्धस्सर्वलोकस्य पश्यतः ॥ नागरखण्डे अध्यायः - ३५. देवाऊचुः—कालेया इति दैतेया हतशेषाः सुरैः कृताः। ते समुद्रं समाश्रित्य निघ्नन्ति शुभकालिकाः ॥ तस्मात्तेषां वधार्थाय त्वं शोषय महार्णवम्। अगस्त्यः—अहं संवत्सरस्यान्ते शोषयिष्यामि सागरम् ॥ ततः सर्वाणि पीठानि यानि सन्ति महीतले। तानि तत्राऽऽनयामास मन्त्रशक्त्या महामुनिः अष्टम्यां च चतुर्दश्यां तेषु सम्पूज्य भक्तितः। योगिनीनां च बृन्दानि कन्यकानां विशेषतः ॥ ततः संवत्सरस्यान्ते प्रसन्नास्तस्य देवताः। अगस्त्यः—

यदि देवि प्रसन्ना मे तदाऽऽस्यं विश सत्वरम्। येन संशोषयाम्याशु समुद्रं देवि वाग्यतः ॥ सा तथेति प्रतिज्ञाय प्रविष्टा सत्वरं मुखे। संशोषिणी महाविद्या तस्यर्षेर्भावितात्मनः। अथ गत्वा समुद्रान्तं स्तूयमानो दिवालयैः ॥ एवमुक्त्वा मुनिः सोऽथ मत्स्यकच्छप सङ्कुलम्। हेलया प्रपपौ कृत्स्नं ग्राहैः कीर्णं महार्णवम् ॥

कुप्यत्कालावलोक प्रभव भयभराऽऽलिङ्गितस्थाणुलिङ्ग
प्रादुर्भूतेशदत्ताभय समुपनमन्नित्य तारुण्ययोगः।
मार्कण्डेयश्चिरायुर्वितरतु भवतां ब्रह्मघस्राऽवसान-
प्रारब्धैकार्णवाऽम्भः कवलित भुवनाऽनल्प कल्पान्तसाक्षी ॥

कुप्यदित्यादि । मार्कण्डेयः मृकण्डुपुत्रो महर्षिः भवतां युष्माकं चिरायुः दीर्घमायुः वितरतु दद्यात् ।

कुप्यन् क्रुध्यन् यः कालः यमः । कालो मृत्यौ महाकाले समये यमकृष्णयो''रिति मेदिनी । तस्यावलोकः दृष्टिः तेन प्रभवः जन्म यस्य तस्मद्भयं तस्य भरः अतिशयः । "अतिशयो भर" इत्यमरः । तेन आलिङ्गितः शिवलिङ्गः । स्थाणु लिङ्गः "स्थाणूरुद्र उमापतिः" इत्यमरः । तस्मात्प्रादुर्भूतो य ईशः सदाशिवः तेन दत्तं वितीर्णं यदभयं भयाभावः । तेन समुपनमन् प्राप्नुवन् । नित्यं शाश्वतं यत्तारुण्यं यौवनम् । "गुणवचन ब्राह्मणादिभ्यः कर्मणि चे''ति भावेष्यञ् । तस्य योगः सम्बन्धः यस्य स तथोक्तः । ब्रह्मणः चतुर्मुखस्य घस्रः दिनम् । "घस्रो दिनाहनी" इत्यमरः । तस्य अवसानम् अन्तः दिनप्रलयः तत्र प्रारब्धः समारब्धो य एकार्णवस्य एकीभूतसागरस्य यदम्भः जलं तेन कबलितानि यानि भुवनानि लोकाः । तेषामनल्पः अत्यधिकश्च यः कल्पान्तः प्रलयः तस्य साक्षी द्रष्टा । प्रलयेऽपि वर्तमानो मार्कण्डेयः मृकण्डुपुत्रो महर्षिः । भवतां युष्माकं चिरायुः दीर्घमायुः वितरतु दद्यात् ।

श्रीमद्भागवते स्कन्धः १२ अध्यायः ८. शौनक उवाच—
आहुश्चिरायुषमृषिं मृकण्डुतनयं जनाः । यः कल्पान्तेऽप्युर्वरितः (अवशिष्टः) येन ग्रस्तमिदं जगत् ॥ स वा अस्मत्कुलोत्पन्नः कल्पेऽस्मिन् भार्गवर्षभः । एक एवार्णवे भ्राम्यन्ददर्श पुरुषं किल ॥

वटपत्रपुटे तोकं शयानं त्वेकमद्भुतम् । श्री सूत उवाच—
अध्यायः १०.

इत्यभ्यर्थितोऽभिष्टुतश्च मुनिना सूक्तया गिरा । तमाह भगवान् शर्वः शर्वाण्या चाभिनन्दितः ॥ श्री भगवानुवाच—कामस्सर्वो महर्षे र्यो भक्तिमां स्त्वमधोक्षजे । आकल्पं ते यशः पुण्य मजरामरता तथा ॥ ज्ञानं त्रैकालिकं ब्रह्मन् विज्ञानं च विरक्तिमत् ॥ ब्रह्मवर्चस्विनो भूयात्पुराणाऽऽचार्यताऽस्तुते ॥ सूत उवाच—एवं वरान् स मुनये दत्वाऽगात् त्र्यक्ष ईश्वरः ।

मारीचः कश्यपोऽव्याद्दितिदनुविनताकद्रुवदित्याद्यपत्य-
प्रायैर्योभूर्भुवः स्वस्त्रिभुवन भवनै र्भूरि संसारभारः ।
अन्योन्यस्पर्धमान त्रिदशपरिवृढप्रौढदैत्याधिराज-
प्रक्रान्ताऽऽक्रन्ददूरीकरण समसमाधानदत्तावधानः ॥ ८२ ॥

मारीच इति । कश्यपः तन्नामा महर्षिः । युष्मानिति शेषः । अव्यात् रक्षतु ।

दितिः, दनुः, विनता, कद्रूः, अदितिः, एताः आदि र्यासां तासां दक्षकन्यानाम् अपत्यानि सन्तानानि । तत्प्रायैः तद्बहुलैः । "प्रायो वयसि बाहुल्य" इति वैजयन्ती । भूः, भुवः, स्वः स्वर्गः । तदात्मकं च त्रिभुवनं लोकत्रयं तदेव त्रयो लोका एव भवनानि गृहाणि । तैः भूरिः प्राज्यः । "भूरिर्ना वासुदेवे च हरे

च परमेष्ठिनि। नपुंसकं सुवर्णं च प्राज्ये स्याद्वाच्यलिङ्गकम् ॥" इति मेदिनी। संसारभारः कुटुम्बवहनाऽऽयासो यस्य स तथोक्तः तमेवाऽऽयासं विविनक्ति—अन्योन्यं परस्परम्। स्पर्धमानाः सङ्घर्षन्तो ये त्रिदशपरिवृढाः देवश्रेष्ठाः प्रौढाः वृद्धिं गताः। "प्रवृद्धं प्रौढमेधित"मित्यमरः। दैत्याधिराजाः राक्षसश्रेष्ठाः। तैः प्रकान्तः य आक्रन्दः दारुणं युद्धम्। "सारावे रुदिते त्रातर्याक्रन्दो दारुणे रणे।" इत्यमरः। तत्र समं निष्पक्षपातं यत्समाधानं स्वस्थता। यथापूर्वस्थितिसम्पादनम्। तत्र दत्तम् अवधानम् एकाग्रता येन स तथोक्तः। मरीचेः ब्रह्ममानसपुत्रस्य मरीचिमहर्षेः अपत्यं पुमान् मारीचः। कश्यपः कश्यं सोमरसादिजनितं मद्यं पिबतीति कश्यपः तन्नामा महर्षिः युष्मानिति शेषः। अव्यात् रक्षतु ॥

मार्कण्डेयपुराणे १०४-३. ब्रह्मणस्तनयो योऽभून्मरीचिरिति विश्रुतः। कश्यपस्तस्य पुत्रोऽभूत्कश्यपानात्स कश्यपः ॥ अस्यभार्या दक्षस्य सप्तदश कन्याः। तासां तत्पुत्राणां च नामानि यथा अदितेर्देवाः, दितेर्दैत्याः, दनोर्दानवाः, काष्ठायामश्वादयः, अरिष्ठायां गन्धर्वाः, सुरसायां राक्षसाः, इलायां वृक्षाः, मुनेरप्सरसोगणाः, क्रोधवशायास्सर्पाः, विनताया गरुडारुणौ, कद्रोर्नागाः, पतङ्ग्याः पतङ्गाः यामिन्याः शम्या इति श्रीमद्भागवतम् ॥

हस्त्यश्वं वः पुलस्त्यः प्रथयतु विततं यस्त्यजन्नित्यकर्म
क्रूरक्रव्यादधीशव्यसन परिहृतिप्राप्त सर्वाऽनुनीतिः ।
भक्त्युद्रेकोपपन्न प्रगुणगुणगणप्रह्वयक्षेन्द्रलक्ष्मी-
वीक्षा संवर्धमानप्रतिदिनहृदयाऽऽनन्द सन्दोहसान्द्रः ॥ ८३ ॥

हस्त्यश्वमिति । पुलस्त्यः तन्नामा महर्षिः । वः युष्माकं हस्त्यश्वं गजान् हयांश्च प्रयच्छतु विस्तारयतु ॥

यः पुलस्त्यः नित्यं फलाऽनिर्देशेन विहितं यत् कर्म कृत्यं सन्ध्यावन्दनादि तत्तथोक्तम् । तत् त्यजन् जहत्सन् क्रूरः दारुणो यः क्रव्यादधीशः राक्षसेश्वरो रावणः । "राक्षसः कोणपः क्रव्या"-दित्यमरः ॥ क्रव्यं मांसमत्तीति क्रव्यात् । "क्रव्ये चे"त्यदेर्विट् । तस्य व्यसनम् आपत् तस्य परिहृतिः निराकरणं, तया प्राप्ता लब्धा । सर्वेषां दैत्यदीनाम् अनुनीतिः सान्त्वनं येन स तथोक्तः । भक्तेः तत्परत्वस्य । "भक्तमन्नं तत्परे चे"ति हेमचन्द्रः । उद्रेकः आधिक्यं तेन उपन्नः प्राप्तः प्रगुणः निष्कपटश्च । "ऋजावजिह्मप्रगुणा" वित्यमरः । यः गुणानां सद्गुणानां गणः समूहः तेन प्रह्वः नम्रो यः कुबेरः उत्तरदिगधिपतिः । तस्य लक्ष्मीः ऐश्वर्यम् । तस्याः वीक्षा दर्शनम् । व्यस्तः अत्र लक्ष्मीरित्यनन्वितः पाठः । तेन संवर्धमानः अतिशयेनैधमानः यः दिने दिने प्रतिदिनम् अहरहः । वीप्सायामव्ययीभावः । योहृदयाऽऽनन्दः हार्दस्सन्तोषः तेन सान्द्रः निबिडः पूर्ण-

स्तथोक्तः। यत्तदोर्नित्यसम्बन्धात् सः पुलस्त्यः तन्नामा महर्षिः वः युष्माकम्। हस्तिनः गजाः अश्वाश्चैषां समाहारो हस्त्यश्वम्। सेनाङ्गत्वादेकवद्भावः। तत् प्रथयतु विस्तारयतु। विस्तरेण ददात्वित्यर्थः। उत्तरकाण्डे सर्गः - ३२.

राक्षसांस्त्रासयामास कार्तवीर्यार्जुनस्तदा। रावणं गृह्य नगरं प्रविवेश सुहृद्वृतः॥ सर्गः - ३३. रावणग्रहणं तत्तु वायुग्रहण-सन्निभम्। ततः पुलस्त्यः शुश्राव कथितं दिवि दैवतैः॥ ततः पुत्र-कृतस्नेहात्कम्पमानो महाधृतिः। माहिष्यतीपतिं द्रष्टुमाजगाम महा-नृषिः॥ तं धर्मेऽग्निषु पुत्रेषु शिवं पृष्ट्वा च पार्थिवम्। पुलस्त्योवाच राजानं हैहयानां तथाऽर्जुनम्॥ मद्वाक्याद्याच्यमानोऽद्य मुञ्च वत्स दशाननम्। स तं प्रमुच्य त्रिदशारिमर्जुनः प्रपूज्य दिव्याभरण स्रगम्बरैः। अहिंसकं सख्यमुपेत्य साग्निकं प्रणम्य तं ब्रह्मसुतं गृहं ययौ॥ भारते आदिपर्वणि चैत्ररथपर्वणि अध्यायः १८१. ईजे च स महातेजाः सर्ववेदविदां वरः। ऋषी राक्षससत्रेण शाक्तेयोऽथ पराशरः॥ ततो वृद्धांश्च बालांश्च राक्षसान् स महामुनिः। ददाह वितते यज्ञे शक्तेर्वधमनुस्मरन्॥ पुलस्त्यस्तु वधात्तेषां रक्षसां भरतर्षभ। उवाचेदं वचः पार्थ पराशरमरिन्दमम्॥ कच्चित्ताता-पविघ्नं ते कच्चिन्नन्दसि पुत्रक। अजानतामदोषाणां सर्वेषां रक्षसां वधात्॥ प्रजोच्छेदमिमं मह्यं न हि कर्तुं त्वमर्हसि। नैष तात द्विजातीनां धर्मो दृष्टस्तपस्विनाम्॥ एवमुक्तः पुलस्त्येन वसिष्ठेन च धीमता। तदा समापयामास सत्रं शाक्तो महामुनिः॥

मिष्टान्नं प्रत्यहं वो वितरतु स भरद्वाजयोगी महेच्छो
वल्लीर्वृक्षांश्च नारीनरयितुमहह ख्याततेजःप्रभावः ।
कैकेयीसूनुसेनाप्रतिपुरुषचतुस्सप्तपञ्चाष्टदिव्य-
श्यामाऽनेकोपचार प्रथितनिरुपमाऽऽतिथ्यसत्कारकारी ॥ ८४ ॥

मिष्टान्नमिति भरद्वाजयोगी भरद्वाजाख्यो मुनिः प्रत्यहं प्रतिदिनं वः युष्मभ्यं मिष्टं मधुरं यदन्नं तत्तथोक्तं वितरतु ददातु ॥

महती प्रशस्या इच्छा कांक्षा यस्य स तथोक्तः । स्त्रियाः पुंवदित्यादिना पुंवद्भावः । "आन्महत" इत्यात्वम् । वल्लीः लताः वृक्षान् पादपांश्च । नारीः स्त्रियः नरान् पुरुषांश्च कर्तुं नारीनरयितुम् । "तत्करोति तदाचष्ट" इति णिजन्तात्तुमुन् । ख्यातौ प्रसिद्धौ तेजः ब्रह्मतेजः प्रभावः । तौ यस्य स तथोक्तः । अहहेत्यद्भुते । कैकेय्याः दशरथपत्न्याः सूनुः तनयो पुत्रोभरतः । "तनयस्सूनु" रित्यमरः । तस्य सेनायाः पुरुषं पुरुषं प्रतिपुरुषम् । वीप्सायां द्विर्भावः । प्रत्येकं चतस्रः पञ्च अष्टौ वा । दिविभवा दिव्याः याः श्यामाः अप्रसूताङ्गनाः । "श्यामो वटे प्रयागस्य वारिदे वृद्धदारके । पिके च कृष्णहरिते पुंसिस्याच्चद्वति त्रिषु ॥ मरिचे सिन्धुलवणे क्लीबं स्त्री शारिबौषधौ । अप्रसूताङ्गनायां चे"ति मेदिनी । स्वर्गादाहूतानां तासां तत्कृता इत्यर्थः । अनेके बहवः उपचाराः

परिचर्याः । तैः प्रथितं प्रख्यातं, निरुपमम् असदृशम् आतिथ्यर्थं कल्पितमन्नादिकम् । "अतिथेर्न्यः" इति तादर्थ्येन्यः । "क्रमादातिथेयेऽतिथ्यर्थेऽत्र साधुनि" इत्यमरः । तदेव सत्कारः सम्मानः तं कर्तुं शीलमस्येति तथोक्तः । एतादृशमहिमाऽन्वितो भरद्वाजयोगी भरद्वाजनामा महर्षिः प्रत्यहं प्रतिदिनं वः युष्मभ्यं मिष्टम् मधुरं पवित्रं च अन्नं वितरतु ददातु । ससेनस्य भरतस्य आतिथ्यचिकीर्षया इच्छामहत्त्वम् । लताः वृक्षांश्च नारीनरनयनेन, स्वर्गाद्दिव्याङ्गनानयनेन च ब्रह्मतेजः, मिष्टातिथ्यकरणेन प्रभावश्चानेन कवीन्द्रेण प्रकटयाञ्चक्रिरे ॥

श्रीमद्रामायणे अयोध्याकाण्डे सर्गः ९१. कृतबुद्धिं निवासाय तत्रैव स मुनिस्तदा । भरतं कैकयीपुत्रमातिथ्येन न्यमन्त्रयत् ॥ सेनायास्तु तवैतस्याः कर्तुमिच्छामि भोजनम् । मम प्रीतिर्यथारूपा त्वमर्हो मनुजर्षभ ॥ अग्निशालां प्रविश्याथ पीत्वाऽपः परिमृज्य च । आतिथ्यस्य क्रियाहेतोर्विश्वकर्माण माह्वयत् ॥ प्राक्स्रोतसश्च या नद्यः प्रत्यक्स्रोतस एव च । पृथिव्यामन्तरिक्षे च समायान्त्वद्य सर्वशः ॥ अन्याः स्रवन्तु मैरेयं सुरामन्यास्सुनिष्ठिताम् । अपराश्चोदकं शीतमिक्षुकाण्डरसोपमम् ॥ आह्वये देवगन्धर्वान् विश्वावसुहहाहुहून् । तथैवाप्सरसो देवीर्गन्धर्वीश्चापि सर्वशः ॥ तेनैव च मुहूर्तेन दिव्याभरणभूषिताः । आजग्मुर्विंशतिसाहस्रा ब्रह्मणा प्रहिताः स्त्रियः ॥ यानि माल्यानि देवेषु यानि चैत्ररथे वने । प्रयागे तान्यदृश्यन्त भरद्वाजस्य तेजसा ॥ बिल्वा मार्दङ्गिका आसन् शम्याग्राहा विभी-

तका: । अश्वत्था नर्तकाश्चासन् भरद्वाजस्य शासनात् ॥ मालती मल्लिका जातिर्याश्चान्या: कानने लता: । प्रमदा विग्रहं कृत्वा भरद्वाजाश्रमेऽवसन् ॥ सुरांसुरापा: पिबत पायसं च बुभुक्षिता: । मांसानि च सुमेध्यानि भक्ष्यस्ना यावदिच्छथ ॥ उच्छोद्य न्तांपयन्ति स्म नदीतीरेषु वल्गुषु । अप्येकमेकं पुरुषं प्रमदा: सप्त चाष्ट च ॥ संवाहन्त्य स्समापेतु र्नार्यो रुचिरलोचना: ।

आयान्ती सत्यलोकादवनितल मिदम्पूर्वपादप्रचारा
वाग्देवी पुण्यतीर्थेऽङ्कुरितकुशलवे यत्र विश्रान्तिमाप्ता ।
सोऽयं रामावतारादॄभुतचरितकथानाटिकासूत्रधार:
श्रीमान् वल्मीकजन्मा दिशतु कृतजगत्सौहितीं साहितीं व: ॥८५

आयान्तीति । वल्मीकजन्मा वाल्मीकिमहर्षि: व: युष्मभ्यं साहितीं कवितां पाण्डितीं च दिशतु ददातु ।

सत्यलोकात् ब्रह्मलोकात् अवनितलं भूमिपृष्ठं प्रति "अध: स्वरूपयोरस्त्री तलम्" इत्यमर: । अयमेव पूर्व: प्रथम: इदम्पूर्व: (यस्य स तादृश:) पादयो: प्रचार: सञ्चार: यस्या: सा तथोक्ता सती । अवनितलं प्र तीत: पूर्वं पादसञ्चारेण नाऽऽगता, अयमेव प्रथम: पादसञ्चार: पादबद्धश्लोकरूपेणायमेव प्रथम: प्रचार: । भूलोके वाल्मीकेरेव प्रथमा श्लोककविता । वाल्मीकिरेव आदिकविरिति यावत् । आयान्ती आगच्छन्ती वाग्देवी सरस्वती पुण्यं

पावनं यत् तीर्थं क्षेत्रं तत्तथोक्तम् । पावनक्षेत्रभूत इत्यर्थः। पावनोपाध्याय इति वा। पावनजलवतीति वा। अङ्कुरोत्पत्तेर्जलस्यावश्यकत्वात्। "तीर्थं शास्त्राध्वरक्षेत्रोपाध्याय नारीरजस्सु च। अवतारर्षिजुष्टाम्बु पात्रोपाध्यायमन्त्रिषु" इति मेदिनी। अङ्कुरितौ अङ्कुरावस्थां प्राप्तौ कुशश्च लवश्च तौ यस्मिन् यत्समीपे स तथोक्तः। तस्मिन्। अत्र सप्तम्याः सामीप्यमर्थः। तदुक्तं शब्देन्दुशेखरे - उप समीपे श्लेषः सम्बन्धः तत्कृतमौपश्लेषिकम्। अत एव इको यणचीत्यादावौपश्लेषिक आधारे सप्तम्युक्ता संहितायामिति सूत्रे भाष्ये। तत्राजादिसामीप्यमेवेगादीनामिति। कुशलवौ सीता कुमारौ - दर्भकिञ्जल्का विति च एतादृशे यत्र यस्मिन् वाल्मीकौ विश्रान्ति विश्रमम् आप्ता लब्धा। रामस्य दशरथरामस्य यः अवतारः आविर्भावः तस्य अद्भुतानि आश्चर्यकराणि यानि चरितानि चेष्टाः तेषां या कथा प्रबन्धकल्पना। सैव नाटिका तस्याः सूत्रधारः कथाप्रवर्तकः। रामायणकर्तेत्यर्थः। श्रीमान् तपःश्रीसम्पन्नः। वल्मीकात् वामलूरोः जन्म उत्पत्तिः यस्य स तथोक्तः। वाल्मीकिर्महर्षिः। वः युष्मभ्यम्। कृता रचिता जगतां सौहिती तृप्तिः यस्यास्सा तथोक्ता। सुहितः तृप्तः तस्य भावः सौहित्यम्। "गुणवचनब्राह्मणादिभ्यः कर्मणि चे"ति भावे ष्यञ्। "स्त्रीनपुंसकयोर्भावक्रिययोः ष्य"ञित्यादिना अमरकोशे ष्यञन्तस्य दिशतु मभ्यधायि। तथा च षित्वान्ङीष्। तादृशीं साहितीं पाण्डितीं स्त्रीत्वदद्यात्॥

पायाद्वः शौनकाऽऽर्यः प्रथितपृथुयशा नैमिशारण्यवासी
सच्छात्रो बह्वृचानां गुरु रतितपसा तोषित श्रीनटेशः ।
प्रख्यातो हौत्रभागप्रकरणगहन प्रक्रियानैकभङ्गी
साङ्गोपाङ्ग प्रपञ्चावगमसुलभसत्सूक्तिसूत्रप्रणेता ॥ ८६ ॥

पायादिति । शौनकार्यः शौनकमहर्षिः वः युष्मान् पातु रक्षतु ॥ प्रथितं प्रख्यातं पृथु महच्च यशः कीर्तिः यस्य स तथोक्तः । नैमिशारण्ये वस्तुं निवासं कर्तुं शीलमस्येति तथोक्तः । सन्तः योग्याः छात्राः शिष्याः यस्य स तथोक्तः । बहवः ऋचो येषां ते बह्वृचाः ऋग्वेदाध्येतारः । "ऋक्पूरब्धूः पथामानक्ष" इत्यप्रत्ययः समासान्तः । तेषां गुरुः देशिकः । ऋग्वेदप्रवर्तक इत्यर्थः । अतितपसा तीव्रतपसा तोषितः सन्तोषितः श्रीनटेशः श्रीनटराजस्वामी येन स तथोक्तः । प्रख्यातः प्रसिद्धः । हौत्रभाग-प्रकरणम् ऋग्वेदः । तस्य गहना दुरवगाहा प्रक्रिया ऋषिच्छन्दो-देवता विनियोगाऽऽदिरूपा प्रक्रिया । तस्या नैकाः बहवः । नञर्थेन नशब्देन सुप्सुपेति समासः । या भङ्ग्यः प्रकाराः तासां यः साङ्गोपाङ्गः अङ्गोपाङ्गसहितः प्रपञ्चः विस्तरः । तस्य अवगमः ज्ञानं, तस्य तदर्था इत्यर्थः । सुलभाः सुग्रहाः । सत्यः सूक्तयः सुभाषितानि येषु तानि सूत्राणि बृहद्देवताग्रन्थरूपाणि । तेषां प्रणेता कर्ता तथोक्तः । तादृशः शौनकाऽऽर्यः शौनकमहर्षिः वः युष्मान् पायात् रक्षतु ॥ शौनकमहर्षिरचितो बृहद्देवताख्यग्रन्थ :—

मन्त्रदृग्भ्यो नमस्कृत्य समाम्नायाऽऽनुपूर्वशः। सूत्रमंगं च पादानामृग्भ्यो वक्ष्यामि दैवतम् ॥ वेदितव्यं दैवतं हि मन्त्रे मन्त्रे प्रयत्नतः। दैवतज्ञो हि मन्त्राणां तदर्थमवगच्छति ॥ इत्यारभ्य, न हि कश्चिदविज्ञाय याथातथ्येन दैवतम्। लौक्यानां वैदिकानां वा कर्मणां फलमश्नुते ॥ ऋषिं तु प्रथमं ब्रूयाच्छन्दस्तु तदनन्तरम्। दैवतामथ मन्त्राणां कर्मस्वेवमिति श्रुतिः ॥ आधारं व्याप्य नाऽऽधारं विविच्यात्मानमात्मनि। ईक्षमाणो भ्रुवौ सन्धि मृचो दैवतवित्पठेत् ॥ स ब्रह्मामृतमत्यन्तं योनिं सदसतोर्ध्रुवम्। महच्चाणु च विश्वेशं विशति ज्योतिरुत्तमम् ॥ इत्यन्तोऽष्टाध्यायात्मकः ॥

**मेधां बोधायनो वो वितरतु सहितः षष्टिसाहस्रशिष्यै-**
**र्यस्यापस्तम्ब एवाधिकशतयजुषां पारगो मुख्यशिष्यः।**
**सूत्रं प्रायुंक्त नैकक्रमविधिनिपुणाऽध्वर्युनानाप्रयोग-**
**व्यक्तिज्ञानोपयुक्तस्फुटमृदुगहनप्रौढसन्दर्भगर्भम् ॥ ८७ ॥**

मेधामिति। बोधायनः तन्नामा महर्षिः वः युष्मभ्यं मेधां ज्ञानं वितरतु दद्यात्।

सहस्राण्येव साहस्राणि। प्रज्ञादित्वात् स्वार्थेऽण्। षष्टिः साहस्राणि शिष्याः छात्राः। तैः सहितः। एकाधिकशतयजुषाम् एकाधिकशतसंख्याकाध्वर्युशाखानां पारगः अन्तपर्यन्तं पठितवानित्यर्थः। एकशतमध्वर्युशाखेति महाभाष्यम्। अन्तात्यन्ता-

ध्वदूरपारसर्वानन्तेषुड" इति गमेर्डः । तादृशः । यस्य बोधायनस्य मुखमिव प्रधानत्वान्मुख्यः । प्रधानः शिष्यस्तथोक्तः । सः आपस्तम्बः । नैके बहवः क्रमाः नियतसन्निवेशाः येषां ते च ये विधयः श्रुतिचोदनानि । तत्र निपुणः कुशलः यः अध्वर्युः ऋत्विग्विशेषः । तस्य ये नाना बहुप्रकाराः प्रयोगाः आचरणानि । तेषां व्यक्तिः प्रकटनं, तस्या ज्ञानं बोधः । तस्मिन्नुपयुक्तः अनुकूलः । स्फुटः सुव्यक्तः मृदुः कोमलः । गहनः गम्भीरश्च प्रौढः प्रवृद्धः सन्दर्भः गुम्भः । स गर्भे मध्ये यस्य तत्तथोक्तम् । सूत्रं सूत्रात्मकं ग्रन्थं प्रायुङ्क्त अरचयत् । यागप्रयोगानुकूल गम्भीरमपि सुग्रहम् आपस्तम्बश्रौत सूत्रमितिप्रसिद्ध मरचयत् आपस्तम्बश्रौतसूत्र मरचयदिति समासार्थसङ्ग्रहः । एतादृशशिष्यसम्पत्सहितः बोधायनः तन्नामा महर्षिः वः युष्मभ्यं मेधां धारणाशक्तिं वितरतु दद्यात् । "स्थानेषु शिष्यनिवहैर्विनियुज्यमाना विद्या गुरुं हि गुणवत्तरमातनोति" इति न्यायमनुसृत्य अनेन कवीन्द्रेण शिष्यद्वारा गुरोः बोधायनस्य गुणवत्तरताऽभिव्यक्तिरकारीति, इयमभिव्यक्ति रस्य कविशिखामणेर्बहुमुखवर्णनाकौशलं प्रकटयति ।

अमावास्येन पौर्णमास्येन वा हविषा यक्ष्यमाणो भवति पुरस्तादेव हविरातञ्चमुपकल्पयत इत्यादि कल्पसूत्रम् ॥

देवर्षिर्नारदोऽव्यात्करधृतमहती पर्वनिस्तन्द्रतन्त्री
निर्व्याजोदित्वर श्रीहरिहरगुणसत्कर्मनामप्रकर्षः ।
ये चान्ये मान्यरूपा दिवि भुवि सनकप्रष्ठदेवर्षिसङ्घाः
सर्वे ते कुर्वतां वः परमगतिकृते ज्ञानमज्ञानशून्यम् ॥ ८८ ॥

देवर्षिरिति । नारदः तन्नामा देवर्षिः । युष्मानिति शेषः । अव्यात् रक्षतु । ये अन्ये इतरे सनकप्रष्ठाः सनकसनन्दनादयः तेषां सङ्घाः समूहाश्च । ज्ञानं मोक्षसाधनभूतां बुद्धिं कुर्वताम् । जनयन्तु वितरन्त्विति वा ॥

करेण हस्तेन धृता या महती वीणाविशेषः नारदवीणा । "वीणा भेदेऽपि महतीत्यमरः । तस्याः पर्वसु सोपानेषु । निस्तन्द्राः अनलसाः । स्वत एव ध्वनन्त इत्यर्थः । तन्त्र्यः गुणाः । ताभ्यः निर्व्याजम् निष्कपटम् । एकान्तभक्तियुक्तमिति यावत् । उदित्वरः उदयन् । "इण्णसिजिसर्तिभ्य" इति करप् । "ह्रस्वस्य पिति कृतीति तुक्" । इति तुक् यः, श्रीयुतौ लक्ष्मीगौरीयुतौ हरिहरौ विष्णुशङ्करौ तयोर्गुणाः शौर्यभक्तवात्सल्यादयो गुणाः सन्ति दुष्टशिक्षणशिष्टरक्षणाऽऽत्मकानि कर्माणि, नामानि गोविन्दसदाशिवादीनि च । तेषां प्रकर्षः अतिशयः स यस्य स तथोक्तः । अप्रयत्नेनैव ध्वनन्त्या महत्या नादेन समम् श्रीहरिहरगुणभरितनामसङ्कीर्तन कुर्वाण इति यावत् । तादृशः देवश्चासौ ऋषिः देवर्षिः नारदः ब्रह्ममानसपुत्रो नारदमहर्षिः । युष्मानिति शेषः । अव्यात् रक्षतु । अन्ये नारदादितरे दिवि स्वर्गे

भुवि भूलोके च मान्यं पूजनीयं रूपं स्वभावः येषां ते तथोक्ताः सनकप्रष्ठाः सनकादयः तेषां सङ्घा समूहाः तथोक्ताः। "रूपन्तु श्लोकशब्दयोः। पशावाकाशे सौन्दर्ये नाणके नाटकादिके। ग्रन्थावृत्तौ स्वभावे च"ति हैमः। सर्वे ते। वः युष्माकम्। अज्ञानेन भ्रान्तिज्ञानेन। अविद्ययेति यावत्। शून्यं रहितम्। ज्ञानं मोक्षोपयोगिनीं धियम्। मोक्षे धीर्ज्ञानम्" इत्यमरः। परमगतिकृते मोक्षाय कुर्वतां जनयन्त्वित्यर्थः। कृञः क्रियासामान्य बोधकत्वात्॥

बृहन्नारदीये पूर्वार्धे अध्याये १२५. रुद्राक्षमालया शश्वच्छोभिनं चन्द्रशेखरम्। तं दृष्ट्वा नारदो विप्रा भक्तिनम्राऽऽत्मकन्धरः॥ ननाम शिरसा तस्य पादयोर्जगदीशितुः। पप्रच्छ शाम्भवं ज्ञानं पशुपाशविमोक्षणम्॥ स शिवः सादरं तस्य भक्त्या सन्तुष्टमानसः। योगमष्टाङ्गसंयुक्तं प्राह प्रणतवत्सलः। स लब्ध्वा शाम्भवं ज्ञानं शङ्करात्लोकशङ्करात्॥ सुप्रसन्नमना नत्वा ययौ नारायणान्तिकम्। सेवितं योगिभिः सिद्धैर्नारायणमतोषयत्॥

शास्त्राणां ये च सूत्रप्रणयनपटवो ये च सप्तर्षिभेदाः
ये चान्ये वालखिल्याः शमदमनिधयो ये प्रसिद्धाः पुराणे।
लोकानां पावनास्ते प्रथितसुचरिता भूर्भुवः स्वर्निवासा
देवब्रह्मर्षिसङ्घाः शिव मनवरतं कुर्वतां सर्वदा वः॥ ८९॥

ऋषीणामनन्तत्वात् सामान्येन सर्वान् सङ्गृह्णाति। शास्त्राणामिति। देवब्रह्मर्षिसङ्घाः देवर्षिब्रह्मर्षिसमुदायाः वः युष्माकम् अनवरतमविच्छिन्नं शिवं मङ्गलं सर्वदा सदा कुर्वतां कुर्वन्तु।

ये सूत्राणाम् अल्पाक्षरमित्यादिलक्षणलक्षितानां व्याकरणादिसूत्राणां प्रणयनं रचनं तत्र पटवः समर्थाः तथोक्ताः। ये सप्तर्षिभेदाः। कालभेदेन भिद्यमाना अत्र्यादिसप्तर्षिभेदाश्च। ये चान्ये पूर्वोक्तेभ्य इतरे। शमः अन्तरिन्द्रियनिग्रहः, दमः बाह्येन्द्रियनिग्रहः। तयोर्निधयः निधानभूताः। पुराणे पुराणेषु। जात्येकवचनम्। प्रसिद्धाः प्रख्याताः लोकानां जनानाम्। कर्मणि षष्ठी पावनाः। पवित्रतासम्पादकाः। प्रथितं सुप्रख्यातं सुचरितम् शोभनाचरितं येषां ते तथोक्ताः। भूः भूर्लोकः, भुवः भुवर्लोकः, स्वः स्वर्गलोकः। तेषु निवासः येषां ते तथोक्ताः। ते देवब्रह्मर्षिसङ्घाः। देवर्षीणां ब्रह्मर्षीणां समुदायाश्च वः युष्माकम् अनवरतम् अविच्छिन्नं शिवं कल्याणं कुर्वतां कुर्वन्तु॥

शास्त्रसूत्रकर्तारः — व्याकरणे - पाणिनि, कात्यायन, पतञ्जलि शाकटायनादयः। न्याये - गौतम कणादादयः। पूर्वमीमांसायां जैमिन्यादयः। वेदान्ते - व्यासादयः। सप्तर्षयः - "मरीचिरत्रिः पुलहः पुलस्त्यः क्रतु रङ्गिराः। वसिष्ठश्च महाभागस्सप्तैते ब्रह्मणः सुताः" ॥

शाखाभेदैरनेकैर्द्विजकुल कलितोद्घोषवद्भिः समेताः
कृच्छ्राऽऽरोहावरोहा विततबहुजटाः काण्डवर्गैरुपेताः ।
विस्तीर्णाः किञ्च नानासवफलसहितास्सेवितास्सत्पथस्थै-
श्चत्वारो वः क्रियासुर्निगमविटपिनो हन्त सन्तापशान्तिम् ॥ ९० ॥

वेदविहितानुष्ठानतत्परमहर्षिप्रस्तावानन्तरं वेदान् प्रस्तौति । शाखाभेदैरिति ॥ निगमा एव विटपिनः वृक्षाः वः युष्माकं सन्तापशन्ति तापत्रयनिवारणम् । आतपतापनिवारणमित्यर्थान्तरम् । क्रियासुः कुर्वन्तु । द्विजाः ब्राह्मणाः । पक्षिण इत्यर्थान्तरम् । "दन्तविप्राण्डजा द्विजा" इत्युभयत्राप्यमरः । तेषां कुलानि सजातीयवर्गाः । "कुलं जनपदे गोत्रे सजातीयगणेऽपि च" इति मेदिनी । तैः कलितः कृतः । "कलिः कवीनां कामधेनुः" । य उद्घोषः उच्चैर्ध्वनिः । स एषामस्तीति तथोक्ताः । तैः अनेकैः बहुभिः । शाखानाम् ऋग्यजुस्सामाथर्वाऽऽत्मकानां तदवान्तराणां च भेदैः विभागैः । विटपादीनां भेदैरित्यर्थान्तरम् । समेताः सहिताः । कृच्छ्रौ कष्टौ । कष्टसाध्यावित्यर्थः "कष्टं कृच्छ्र"मित्यमरः । आरोहः उत्तरपदग्रहणम् । अधिरोहणमित्यर्थान्तरम् । अवरोहः पूर्वपदग्रहणम् । अविरोहणं चेत्यर्थान्तरम् । तौ येषां ते तथोक्ताः । वितताः विस्तृताः । बहवः अनेके । जटाः पदक्रमजटादिष्वन्यतमाः । शिफा इत्यर्थान्तरम् । "शिफा जटे" इत्यमरः । काण्डाः प्रथमकाण्डेत्यादिविभागाः । स्कन्धा इत्यर्थान्तरम् । "काण्डस्स्तम्बे

तरुस्कन्ध" इति मेदिनी। तेषां वर्गैः सजातीयसमूहैः उपेताः सहिताः। विस्तीर्णाः विस्तृताः। "अनन्ता वै वेदा" इत्युक्तेः। विस्तृविस्तृता इत्यर्थान्तरम्। किञ्च नाना ज्योतिष्टोमादिनामभिर्बहुप्रकाराः। सवाः यागाः। फलानि स्वर्गादीनि च। तैः सहिताः युक्ताः। अर्थान्तरे आसवेति छेदः। आसवाः मद्यानि। भङ्गश्लेषः। फलानि च तैस्सहिता इति। सन् सत्यः। साधुरित्यर्थान्तरम्। "सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सदि"ति मेदिनी। पन्थाः सत्पथः तस्मिन् तिष्ठन्तीति सत्पथस्थाः। तैः सत्यमार्गतत्परैः। सत्याचारतत्परैरिति वा। तेषां सदाचारावबोधाय वेदाऽऽश्रयणस्याऽऽवश्यकत्वात्। साधुमार्गयायिभिरित्यर्थान्तरम्, तेषामातपवारणाय वृक्षाऽऽश्रयणस्यावश्यकत्वात्। सेविताः आश्रिताः। चत्वारः वेदा एव विटपिनः वृक्षाः वः युष्माकम्। सन्तापस्य तापत्रयस्य। आतपसन्तापस्येत्यर्थान्तरम्। शान्तिं निवारणं क्रियासुः कुर्वन्तु। श्लेषमूलकरूपकालङ्कारः। हन्तेत्यनुकम्पायाम्। श्रीमद्भागवते स्कन्धः ३ अध्यायः १२ — कदाचिध्यायतः स्रष्टुर्वेदा आसंश्चतुर्मुखात्। कथं स्रक्ष्याम्यहं लोकान्समवेतान्यथापुरा॥ चातुर्होत्रं कर्मतन्त्रमुपवेदनयैः सह। धर्मस्य पादाश्चत्वारस्तथैवाश्रमवृत्तयः॥ मैत्रेय उवाच—

ऋग्यजुस्सामाथर्वाऽऽख्यान् वेदान् पूर्वाऽऽदिभिर्मुखैः। आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः॥ इतिहासपुराणानि पञ्चमं वेदमीश्वरः। सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः॥

नित्यं संवर्धिताऽऽत्माऽवितथ बहुकथापुण्य शैवालिनीभिः
स्थानं गीतासुधायाः क्षितिसुरनिवहैस्सादरैर्मथ्यमानः ।
मध्ये विष्णुं दधानस्त्रिभुवननिलयं पर्वसु प्राप्तसम्पत्
सर्वं वो भारताम्भोनिधिरयमपरः पापजालं पुनीयात् ॥ ९१ ॥

वेदप्रसङ्गात् पञ्चमं वेदं भारतं प्रस्तौति - नित्यमिति । भारत-मेव अम्भोनिधिः समुद्रः । वः युष्माकं पापजालं पापसमूहं पुनीयात् पावयेत् ॥

नित्यं सदा वितथाः असत्या न भवन्तीत्यवितथाः सत्या इत्यर्थः । "वितथं त्वनृतं वच" इत्यमरः । बह्व्यश्च याः कथाः अवान्तरगाथाः । ता एव शैवालिन्यः नद्यः । ताभि स्तथोक्ताभिः । "नदी तरङ्गिणी शैवालिनी"ति, "जलनीली तु शैवालं शैवलं" इति चामरः । संवर्धितः अत्यन्तं वृद्धिं गमितः आत्मा देहः यस्य स तथोक्तः । "आत्मा कलेबरे यत्न" इति धरणिः । गीता भगवद्गीता । सैव सुधा अमृतं, तस्याः स्थानम् उत्पत्तिस्थानम् । निवासस्थानं वा तथोक्तः । आदरेण सहितैः सादरैः । क्षितिसुराणां विप्राणां निवहैः समूहैः । मथ्यमानः तत्त्वजिज्ञासया विमृश्यमानः । अम्भोधिरपि सुधार्थं मथ्यत एव । मध्ये ग्रन्थान्तर्भागे । समुद्रपक्षे मध्यभाग इत्यर्थः । त्रयाणां भुवनानां स्वर्गमर्त्यपाताललोकानां समाहारस्त्रि-भुवनं, तस्य निलयः निवास स्थानम् । रक्षणप्रदेशो वा । "निलयो-ऽस्तमये गृहे । गोपनस्य प्रदेशेऽपी"ति हैमः । कुक्षिस्थाखिललोक-

मित्यर्थः। अत एवास्य "विश्वम्भर" इति नाम प्रसिद्धम्। स्वस्मिन्नध्यस्तभुवनत्रयमिति वा। त्रिभुवनं निलयो यस्य स इति बहुव्रीहिणा त्रिभुवनव्यापकमिति वा। आत्मतया भुवनत्रये अध्यस्तमित्यादि वा। तादृशं विष्णुं श्रीमन्नारायणं दधानः धृतवान्। भारतस्य मध्ये श्रीकृष्णचरितस्य सत्त्वात्, समुद्रस्य मध्ये श्रीमन्नारायणस्य शेषशायित्वाच्चैवमुक्तिः। पर्वसु आदिसभाऽऽदिपर्वसु। पूर्णिमादिषु। सम्पत् ज्ञानविज्ञानसम्पत् येन स तथोक्तः। अम्भोधिपक्षे प्राप्ता सम्पत् वृद्धिरूपा सिष्णासुजन सम्पद्वा येन स इत्यर्थः। अयमपरः प्रसिद्धादन्यः भारताम्भोधिः भारतमेव समुद्रः। वः युष्माकं पापानां दुष्कृतानां जालंसमूहं तथोक्तम्। तत्पुनीयात् पावयतु। बहुजन्मार्जितमपि पापसमूहं नाशयेदिति भावः॥

**नन्वाद्यैर्मानवानां निरुपधि हितमावेदयद्भिर्मुनीन्द्रैः**
**मन्वाद्यैः सम्प्रणीता स्मृतिरिह निखिलाऽप्यागमार्थैकवाक्या।**
**अव्यग्राऽऽकृष्यमाणप्रचलरथपुरश्वक्रमार्गानुधाव-**
**त्पश्चाच्चक्राग्ररीतिः परिणमयतु वो धर्मबुद्धिं विशुद्धाम्॥ ९२॥**

पापहरणप्रसङ्गात् तादृशीं स्मृतिं प्रस्तौति। नन्विति। स्मृतिः ऋषिप्रोक्तो वेदमूलको ग्रन्थविशेषः। वः युष्माकं धर्मबुद्धिं धर्मसम्बन्धिनीं निश्चयात्मिकां धियम्। विशुद्धां तद्विहितधर्माऽऽचरणदीक्षितां परिणमयतु परिवर्तयतु॥

आदौ भवा आद्याः प्रथमाः। दिगादित्वाद्यत्। तैः मानवानां मनुष्याणा मुपधेः कपटान्निष्क्रान्तं निरुपधि निष्कपटम्। "कपटोऽस्त्री व्याजदम्भोपधय" इत्यमरः। "निरादयः क्रान्ताद्यर्थे पञ्चम्ये"ति समासः। हितं पथ्यम्। ननु निश्चयेन आवेदयद्भिः सम्यग्बोधयद्भिः। "ननुप्रश्नेऽप्यनुनयेऽनुज्ञानेऽप्यवधारण" इति विश्वः। मुनीन्द्रैः ऋषिश्रेष्ठैः। सम्प्रणीता सम्यग्रचिता। सम्यक्त्वमेव स्फुटयति आगमार्थैकवाक्येत्यनेन। आगमस्य वेदस्य अर्थः अभिधेयः। तेन एकवाक्या समानार्था। अन्यूनाऽनतिरिक्तार्थेति यावत्। निखिला समस्ता स्मृतिः। जात्येकवचनम्। स्मृतय इत्यर्थः। अव्यग्रम् अव्याकुलं यथा तथा। आकृष्यमाणः आनीयमानः। प्रचलः वेगेन गच्छन् यः रथः स्यन्दनः तस्य पुरः अग्रे विद्यमानं चक्रं रथाङ्गम्। तस्य यो मार्गः पन्थाः। तमनुधावत् अनुसृत्य पश्चात् शीघ्रं गच्छत् यत् पश्चात् पृष्ठभागे विद्यमानं चक्रं तस्य अग्रं पुरोभागः। तस्य रीतिः प्रकार इव प्रकारो यस्यास्सा तथोक्ता। पुरतो विद्यमानं रथचक्रं यद्दिगभिमुखं याति पश्चाच्चक्रमपि तद्दिगभिमुखमेव याति। एवं श्रुति यं मार्गमनुसरति तमेव स्मृतिरप्यनुसरति। स्मृतीनां प्रामाण्यस्य श्रुति मूलकत्वात्। एतादृशी सती वः युष्माकं धर्मस्य चोदनालक्षणस्य सम्बन्धिनीं धियं विशुद्धां पवित्रां, धर्माचरणदीक्षितां परिणमयतु परिवर्तयतु। श्लोकेऽस्मिन् पश्चाच्छत्रेत्यपपाठः। स्मरन्ति वेदमनयेति स्मृतिः। स्मृतिकर्तारस्तु—

मन्वत्रिविष्णुहारीत याज्ञवल्क्योशनोऽङ्गिराः। यमाऽऽपस्त-म्बसंवर्ताः कात्यायनबृहस्पती॥ पराशर व्यासशङ्खलिखितादक्षगौ-तमौ। शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः॥ तत्र मनोः प्राधान्यम् - कुल्लूकभट्टप्रदर्शितबृहस्पतिवचनम् - "वेदार्थोपनिबद्ध-त्वात्प्राधान्यं हि मनोः स्मृतम्" इति॥

**प्रायः पापिष्ठबुद्ध्या निजनिजमत संस्थापनायेश विष्णो**
**र्हन्तोत्कर्षापकर्षग्रहभृतमनसां दूरतो निष्फलानि।**
**सर्वत्रैवाविरोधान्यधिमहि नहिनिन्दाद्भुतयन्यायभाजा-**
**मव्यासुः सेतिहासागममनुदिवसं वः पुराणानि कामम्॥ ९३॥**

आर्षस्मृतिप्रसङ्गादार्षाणि पुराणानि प्रस्तौति। प्राय इति। पुराणानि स्कान्दाऽऽदीनि अष्टादशपुराणानि उपपुराणानि च। अनुदिनं प्रतिदिवसम्। वः युष्मान् कामं कामं यथेप्सितम्। अव्यासुः रक्षन्तु॥ प्रायः प्रायेण। पापं कल्मषम्। मन्मतमेव स्थापनीयमिति दुराग्रहः। तदस्यास्तीति पापा। अर्शआद्यच्। अतिशयेन पापा पापिष्ठा या बुद्धिः निश्चयात्मिका धीः तथोक्ता। तया निजनिजस्य स्वस्य स्वस्य यन्मतं तस्य स्थापनं सिद्धान्तीकरणं तथोक्तम् तस्मै। ईशः सदाशिवः विष्णुः श्रीमन्नारायणश्च तौ तथोक्तौ तयोः। हन्तेति खेदे। उत्कर्षः आधिक्यम्। अपकर्षः नैच्यम्। तयोर्ग्रहः ग्रहणं तेन भृतं निभृतम्। ग्रहोऽनुग्रहनिर्बन्ध-ग्रहणेषु रणोद्यमे। सूर्यादौ पूतनादौ चे"ति विश्वकोशः। पिशा-

चग्रस्तमित्यपि गम्यते । तादृशं मनः मतिर्येषां ते तथोक्ताः । तेषां दूरतः अत्यन्तं निष्फलानि फलशून्यानि । अधिमहि भूमौ । अव्ययं विभक्तीत्यादिना विभक्त्यर्थे अव्ययीभावः । नहि निन्दान्यायः निन्दार्था नहि निन्दा, किन्तु स्तोतव्यस्तुत्यर्थेति । तं भजन्ति सेवन्त इति तथोक्ताः । यत्र कुत्रापि पुराणे विष्णुं स्तुवन्नीशस्यापकर्षः, तथा ईशं स्तुवन् विष्णोरपकर्षो वा स वर्ण्येत तत्स्तोतुं प्रकृतस्य स्तोत्रायैव । न ह्यन्यस्य निन्दार्थमिति मतिमन्तः । सर्वत्र उत्कर्षापकर्षवर्णनपरेषु सर्वेष्वपि स्थलेषु । अविरोधान्येव अल्पीयसा विरोधेनापि शून्यानि । तादृशानि पुराणानि सर्गश्च प्रतिसर्ग''श्चेत्यादि लक्षणलक्षिता ग्रन्थविशेषाः स्कान्दादयः । इति ह पारम्पर्येणोपदेशः । "पारम्पर्येणोपदेशे स्यादैतिह्यमितिहाव्यय" मित्यमरः । सोऽस्मिन्नस्तीति इतिहासः । (इति ह + अस्) आगमाः शैववैष्णवाऽऽद्यागमाः । तैः सहितं यथा तथा तथोक्तम् । इतिहासागमसहितानीति यावत् । वः युष्मान् । दिने दिने अनुदिनम् । कामम् यथेप्सितम् । "कामः कामे त्रिषु स्मृतः । कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितमित्यमरः । अव्यासुः रक्षन्तु । अनुदिनमित्यनेन प्रतिदिनं शुभप्रेप्सुना पुराणपठनं कार्यमिति सूच्यते ।

स्कान्दे उमामहेश्वरखण्डे अध्यायः - ८. यो विष्णुः स शिवो ज्ञेयो यः शिवो विष्णुरेव सः । श्रीमद्भागवते—यद् द्व्यक्षरं नाम गिरोदितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत् । पवित्रकीर्ति

तमलङ्घ्यशासनं भवानहो द्वेष्टि शिवं शिवेतरः । नागरखण्डे अध्यायः २४७. एकदा शिवभक्तानां विवादः सुमहानभूत् । समं केशवभक्तैश्च परस्परजिगीषया ॥ ततस्तु भगवान् रुद्रः स्वभक्तानाञ्च पश्यताम् । ऐक्यं विष्णुगणैः कुर्वन् दध्रे रूपं महाद्भुतम् ॥ तदा हरिहराख्यं च देहार्धाभ्यां दधार सः । हरश्चैवाऽर्धदेहेन विष्णुरर्धेन चाभवत् ॥ एकतो वैनतेयश्च वृषभश्चान्यतोऽभवत् । द्वयोरैक्यं समं विश्वं विश्वमैक्यमवर्तत ॥ विभेदमतयो नष्टाः श्रुतिस्मृत्यर्थबाधकाः । ब्रह्मपुराणे अध्यायः २०६. श्रीकृष्णभगवानुवाच—मत्तोऽविभिन्नमात्मानं द्रष्टुमर्हसि शङ्कर। योऽहं स त्वं जगच्चेदं सदेवासुरमानुषम् ॥ अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः ॥

**वाल्मीकेर्वक्त्रपद्मादुपगतजनन स्सर्वविख्यातकीर्ति-**
**र्हंसैः सत्पक्षपातैश्चरमतनुधृतः काण्डसम्पत्समेतः ।**
**पुण्यश्लोकप्रतीतो विदलितशतपत्राऽधिरूढाऽक्षरश्रीः**
**कुर्याद्रामायणाख्यो विधिरयमपर स्सन्ततां सन्ततिं वः ॥ ९४ ॥**

आर्षग्रन्थप्रसङ्गादार्षं श्रीमद्रामायणं प्रस्तौति—वाल्मीकेरिति । रामायणाख्यः रामायणनामा विधिः ब्रह्मा, वः युष्माकं सन्ततिं सन्तानं, सन्तताम् अविच्छिन्नां कुर्यात् ॥

वल्मीकस्याऽपत्यं पुमान् वाल्मीकिः । अत इञ् । तस्य वक्त्रं मुखमेव, पद्मं कमलं, तस्मादुपगतं प्राप्तं जननं जन्म यस्य स

तथोक्त । वाल्मीकि महर्षिराचत इति भाव । चतुर्मुखो ब्रह्मापि श्रीवि-ष्णुनाभिपद्माज्जातः । इदं विशेषणं ब्रह्मणोरुभयोर्भेद (अपरत्व) सूचकम् । एवमुत्तरत्रापि । सर्वेषु सकलेषु लोकेषु विख्याता प्रथिता कीर्तिर्यस्य स तथोक्तः । सति श्रीरामे परब्रह्मणि पक्षपातः स्नेहः ऐक्थाऽनुसन्धानाऽर्थाऽऽसक्तिः येषां ते तथोक्ताः तैः । "वेदवेद्ये परे पुंस जाते दशरथात्मजे । वेदः प्राचेतसादासीत्साक्षाद्रामाय-णात्मना ॥" इत्युक्तेः । हंसै कुटीचक बहूदक हंसपरमहंसादिष्वन्यत मैर्यतिभिः । चरमा अन्त्या या तनुः तया धृतः परिगृहीतः तथोक्तः । प्रकृतेनैव जन्मना येषां मोक्षसाम्राज्यलक्ष्मीप्राप्तियोग्यता, तैरेव श्रीमद्रामायणं धार्यत इति भावः । रामायणैकशरण्यानां पुनर्जन्म नैव स्यादिति यावत् । अन्यत्र योग्यपक्षविक्षेपणैः श्वेतगरुद्भिः पृष्ठे-नोह्यमान इत्यर्थः । हंसवाहन इति यावत् । काण्डाः बालादिकाण्डाः तेषां वा + त एव वा सम्पत् ऐश्वर्यं तया समेतः युक्तस्तथोक्तः । अन्यत्र वेदकाण्डसम्पत्समेत इत्यर्थः । पुण्याः पावनाः । "एकै-कमक्षरं प्रोक्तं महापातक नाशन"मित्युक्तेः । श्लोकाः पद्यानि तैः प्रतीतः प्रख्यातः । "ख्याते हृष्टे प्रतीत" इति, "पद्ये यशसि च श्लोक" इति चामरः । यद्वा पावनकीर्तिमद्भी रामादिभिः प्रख्यातः । यद्वा पावनकीर्तिभिः वाल्मीक्यादिभिः प्रतीतः ज्ञातः । "प्रज्ञातज्ञात हृष्टेषु प्रतीतस्सादरे त्रि"ष्विति रभसः । ये बहुजन्मा-ऽर्जितसुकृतराशयस्तैरेव रामायणं सरहस्यं ज्ञायत इति भावः ।

अन्यत्र पावनकीर्तिमद्भिः प्रतीनः ज्ञातः प्राप्त इति वाऽर्थः। केचन मुमुक्षवः सद्योमुक्तिमनवाप्य ब्रह्मलोकं गत्वा ब्रह्मणा सह मुच्यन्त इति वेदान्ते प्रसिद्धम्। विदलितानि विस्तृतानि शतानि अनन्तानि यानि पत्राणि दलानि तालभूर्जरादिपत्राणि। "पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्" इत्यमरः। तेषु अधिरूढानि अधिष्ठितानि लिखितानीत्यर्थः। अक्षराणि वर्णाः, तान्येव श्रीः सम्पत् यस्य स तथोक्तः। शतकोटिप्रविस्तरमित्युक्तेः। अन्यत्र विदलितशतपत्रं विकसितपद्मं। "शतपत्रं कुशेशय"मित्यमरः। अधिरूढः अधिष्ठितवान् कमलासन इत्यर्थः। तादृशः। अक्षरश्रीः अनश्वरैश्वर्यः। इति विशेषणोभयकर्मधारयः। रामस्य अयनं रामायणम्। "रमन्ते योगिनोऽस्मिन्, रमते योगिहृदयेष्विति वा रामः। तस्य चरितान्वितमयनम् शास्त्रमिति शब्दकल्पद्रुमः। रामस्य अयनं मार्गः रामप्रापकमार्ग इति। रामस्य अयनं गृहं निवासस्थानमिति यावत्। इति च बहुभिः बहुधा वर्णितम्। सर्वत्रापि "पूर्वपदात्संज्ञायामग" इति णत्वम्। रामायणमित्याख्या नाम यस्य स तथोक्तः। अयमपरः चतुर्मुखादन्यः विधिः ब्रह्मा। वः युष्माकं सन्ततिं पुत्रपौत्रादिसन्तानं सन्तताम् अविच्छिन्नां कुर्यात् अविच्छिन्नसन्ततिप्रदो भवत्विति भावः। सृष्टिकर्तुरविच्छिन्नसन्तति प्रदानमत्यन्तं समुचितम्॥

यद्बीजं जन्मबीज प्रचयदहनकृ द्यस्य सारो निपीतो
द्राङ्मातुः स्तन्यपानं परिहरति नृणां यच्च नैगमान्तात् ।
प्रभ्रश्यत्यन्वहं यत्प्रथित शुकमुखाऽऽस्वादनात्सारभूतं
स्यादामोदाय तद्भागवतफलमिदं नित्यमत्यद्भुतं वः ॥ ९५ ॥

मोक्षग्रन्थप्रसङ्गात्ताहशं श्रीमद्भागवतं प्रस्तौति—यद्बीजमिति । भागवतफलं श्रीमद्भागवतमेव फलम् । युष्माकमिति शेषः । आमोदाय अब्रह्मानन्दाय स्यात् भूयात् ।

यस्य भागवतस्य बीजम् उत्पत्तिकारणभूतः श्रीकृष्णभगवान् । जन्मनां बीजानि उत्पत्तिकारणानि अविद्यादीनि तेषां प्रचयः समूहः, तस्य दहनं क्षोषः तत्करोतीति तथोक्तम् । मोक्षप्रदमिति यावत् । अद्भुतत्वे कारणमिदम् । सामान्यफलस्य बीजं जन्मकारणम् । श्रीमद्भागवतफलस्य बीजं तु जन्मपरम्परानिवारकं यतः । एवमुत्तरत्राप्यूह्यम् । यस्यभागवतस्य सारः श्रेष्ठांशः निपीतः नितरां पीतः सन् स्वानुभवपर्यन्तं ज्ञातस्सन्निति यावत् । मातुः जनन्याः स्तनयोर्भवं स्तन्यं क्षीरम् । शरीरावयाच्चेति यत् । तस्य पानं द्राक् शीघ्रं परिहरति त्याजयतीत्यर्थः । श्रीमद्भागवत तत्वानुभववतः पुनर्जन्म न स्यादेवेत्येतत् । लौकिकफलन्तु न तथा । यत् श्रीमद्भागवतफलं निगमः वेदः तस्य सम्बन्धी यस्स नैगमः । तस्येदमित्यण् । स चासावन्तः अन्तिमो भागः । उपनिषदिति यावत् । तस्मात नैव प्रभ्रश्यति नैव पतति । सामान्यं फलन्तु सुपक्वं

वृक्षात्पतति । यत् अहन्यहनि प्रतिदिनं प्रथितं प्रख्यातम् यत् शुकस्य शुकमहर्षेः मुखं वदनं तस्य आस्वादात् तत्कृतरुचिग्रहणात् । तेन प्रापितरुच्यतिशयाद्वा । सार-भूतम् अतिशयितमाधुर्यमित्यर्थः । भक्तशिखामणे र्ज्ञानिवरेण्यस्य मुखेनोपदिष्टत्वात् पठतां श्रोतॄणां चाऽऽशु भक्तिज्ञानवैराग्यप्रदमिति भावः । लौकिकफलस्यापि शुकमुखास्वादनान्माधुर्यातिशयः प्रसिद्धः । यद्वा अन्यास्वादितफलस्य लौकिकस्य निस्सारता स्यात् । भागवत-फलस्य तु स्वादुत्वातिशय इति अद्भुतत्वे हेतुः । नित्यं सदा अद्भुतं पूर्वोक्तरीत्या आश्चर्यकरम् । प्रतिदिनंपठ्यमानमपि नवनव-महार्थस्फोरकमिति भावः । एतादृशमिदं भागवतम् । भगवतः श्रीकृष्णपरमात्मनः इदं भागवतम् । तस्येदमित्यण् । यद्वा अधिकृत्य ग्रन्थ इत्यण् । "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्य-स्याथ मोक्षस्य षण्णां भग इतीरणा ॥" ऐश्वर्यादिषट्कं यस्मिन् वासुदेवे नित्यमप्रतिबन्धत्वेन सामस्त्येन च वर्तते । "उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥" उत्पत्त्यादिविषयं च विज्ञानं यस्य स वाच्यो वासु-देवः भगवानिति श्रीमद्भगवद्गीताभाष्ये श्रीमच्छङ्कर भगवत्पूज्यपादाः । एतादृशं भागवतमेव फलं वः युष्माकम् आमोदाय आनन्दाय ब्रह्मानन्दायेति भावः । स्यात् भूयात् । लौकिकं प्रतिदिनम् आस्वा-दितमनादराय स्यात् । इदन्तु न तथेति अद्भुतत्वे इदमपि हेतुः । "निगमकल्पतरोरिति" श्लोके लौकिक–भागवतफलयोः साम्य-

मुक्तम्। अत्र तु वैलक्षण्यमुक्तमिति विशेषः। श्रीमद्भागवते स्कन्धः १२. अध्यायः १२. तत्राष्टौ दशसाहस्रं श्रीभागवतमुच्यते। इदं च भगवता पूर्वं ब्रह्मणे नाभिपङ्कजे ॥ स्थिताय भवभीताय कारुण्यात् सम्प्रदर्शितम्। आदिमध्यावसानेषु वैराग्याख्यान संयुतम् ॥ हरिलीला कथाव्राताऽमृताऽऽनन्दित सत्सुरम्। सर्ववेदान्तसारं यद् ब्रह्मात्मैकत्वलक्षणम् ॥ वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम् ॥ स्कान्दे वैष्णवखण्डे श्रीभागवतमाहात्म्ये अध्यायः— ३. श्रीमद्भागवतं शास्त्रं नित्यं यैः परिसेवितम्। पितुर्मातुश्च भार्यायाः कुलपङ्क्तियाः सुतारिता ॥ विप्रकाशो विप्राणां राज्ञां शत्रुजयो विशाम्। धनं स्वास्थ्यं च शूद्राणां श्रीमद्भागवताद्भवेत् ॥ योषितां च परेषां च सर्ववाञ्छित पूरणम् ॥

**मीमांसे द्वे सतर्कं फणिपतिफणितं योगसांख्यौ च शास्त्रा-**
**ण्याम्नायाङ्गानिशेषाण्यपि च जगति येऽन्ये च वाणीविलासाः।**
**सर्वे ते कुर्वतां वः सकलविषयधीघर्षशाणायमाना**
**नित्यं बुद्धेर्विकासं भुवि निखिलजगत्तत्त्वविज्ञानहेतोः ॥ ९६ ॥**

आर्षसारस्वत प्रसङ्गेन सारस्वतसामान्यं प्रस्तौति—मीमांसे इति। वाणीविलासाः सरस्वती विहाराः वः युष्माकं बुद्धेः निश्चयात्मिकायाः विकासं बुध्यभिवृद्धिमिति भावः। तं कुर्वतां कुर्वन्तु ॥

द्वे मीमांसे पूर्वोत्तरमीमांसे। तर्केण न्यायशास्त्रेण सहितं सतर्कम्। तर्कशास्त्रं चेत्यर्थः। फणिपतिः आदिशेषः पतञ्जलिरिति

यावत् । तेन फणितम् उक्तम् । अत्र भणितमिति पाठो न्याय्यः । भणतेः शब्दार्थकत्वात् । व्याकरणशास्त्रमिति यावत् । योगः चित्तवृत्तिनिरोधः । अनेन योगशास्त्रं लक्ष्यते । संख्या ज्ञानं, तत्सम्बन्धी सांख्यः, कपिलादिप्रणीत सांख्यशास्त्रं च तौ तथोक्तौ । तस्येदमित्यण् । शेषाणि उक्तेभ्योऽवशिष्टानि । आम्नायो वेदः । "श्रुतिः स्त्री वेद आम्नाय" इत्यमरः । तस्य अङ्गानि शिक्षादीनि शास्त्राणि । अपि च किञ्च येऽन्ये उक्तेभ्य इतरे । वाणीविलासाः सरस्वतीविहाराः विद्याः कलाश्च ते सर्वे चतुर्विधपुरुषार्थ सम्बन्धि वाणीविहार सर्वस्वमिति यावत् । सकलाः ऐहिकामुष्मिक मोक्षसम्बन्धिनस्समस्ता विषयाः गोचराः यस्यां सा धीः बुद्धिः तस्या घर्षः शातनम्, तत्र शाणायमानाः निकषायमाणाः उत्तेजका इति भावः । कर्तुः क्यङ् सलोपश्चे"ति क्यङि लटश्शानच् । "शाणस्तु निकषः कष" इत्यमरः । ते सर्वे सकला वाणीविलासाः भुवि भूम्यां निखिलं समस्तं यज्जगत् लोकः तस्य तत्त्वं याथार्थ्यं तस्य विज्ञानं विशेषज्ञानम् । भौतिकमाध्यात्मिकञ्चेति भावः । तस्य हेतुः कारणभूता तथोक्ता । तस्याः वः युष्माकं बुद्धेः निश्चयात्मिकाया धियः विकासं दीप्तिं नित्यं सर्वदा । यद्वा नित्यं शाश्वतमिति विकासविशेषणम् । कुर्वतां कुर्वन्तु । भवतां बुद्धिं सकलजगद्याथार्थ्याऽवगाहन समर्थां कुर्वन्त्विति यावत् ॥

सृष्टिस्थित्यन्तकर्मस्वजहरिगिरिशा येन नित्यं नियुक्ता
ज्योतिश्चक्राण्यशेषा ण्यविरतमपि यो भ्रामयत्यात्तवेगम् ।
दुर्वारस्वप्रवाहः प्रबलनिजबलः पूर्वपूर्वापहन्ता
कालो निष्पक्षपातो भवतु बहुजगद्भक्षको रक्षको वः ॥ ९७ ॥

बुद्धिविकासाय सकलशास्त्राद्यध्ययनमावश्यकम् । तच्च "अनन्तशास्त्रं बहुवेदितव्यमल्पश्च कालो बहवश्च विघ्नाः इति वचनात् चिरं जीवितं विना नैव सम्भवि । तच्च कालदेवतानुग्रहाऽधीनमिति तां प्रस्तौति—सृष्टीत्यादि । कालः कालरूपः परमात्मा । वः युष्माकं रक्षको भवतु ।

येन कालेन अजः ब्रह्मा हरिर्वैकुण्ठः, गिरिशः रुद्रश्च ते तथोक्ता ते । सृष्टिः सर्जनं, स्थितिः रक्षणम्, अन्तः प्रलयश्च त एव कर्माणि कर्तव्यानि तथोक्तानि । तेषु नित्यं सदा नियुक्ता आज्ञप्ताः । यः कालः अशेषाणि समस्तान्यपि ज्योतिश्चक्राणि नक्षत्रजालानि (समूहान्) "ज्योतिरग्नौ दिवाकरे पुमान्, नपुंसकं दृष्टौ स्यान्नक्षत्र प्रकाशयो"रिति मेदिनी। "चक्रं जालं जालक" मिति कोशः । अविरतमपि सर्वदाऽपि अविश्रान्तं वा । आत्तः स्वीकृतो वेगः शीघ्रता यस्मिन् कर्मणि तद्यथा भवति तथा भ्रामयति चालयति । दुर्वारः वारयितुमशक्यः । तादृशो यः स्वस्य प्रवाहः अविच्छिन्ना प्रवृत्तिः यस्य स तथोक्तः । "प्रवाहस्तु प्रवृत्ति"रित्यमरः । प्रबलः अत्यधिकः । निजं स्वकीयं बलं सत्त्वं यस्य स तथोक्तः । पूर्वपूर्वस्य

पूर्वकालजातस्य प्राणि समुदायस्येत्यर्थः। हन्ता नाशकस्तथोक्तः। पक्षपातः एकस्मिन् स्नेहातिशयः तस्मान्निष्क्रान्तो निष्पक्षपातः। यस्मिन् कस्मिन्नपि प्रत्येकस्नेहरहित इति भावः। जगतां लोकानां भक्षकः नाशकः तथोक्तः। एतादृशः कालः कालरूपः परमात्मा। अत्र कालशब्देन परमात्मा विवक्षितः। अजहरिगिरिशशासकत्वोक्तेः। सः भवतां युष्माकं रक्षकः अविता चिरजीवितप्रद इत्यर्थः। तादृशो भवतु। शिवपुराणे वायवीये संहिता:—मुनय ऊचुः—कालादुत्पद्यते सर्वं कालादेव विपद्यते। न कालनिरपेक्षं हि क्वचित् किञ्चिच्च विद्यते॥ ब्रह्माहरिश्च रुद्रश्च तथान्ये च सुराऽसुराः यत्कृतां नियतिं प्राप्य प्रभवो नातिवर्तितुम्। तस्मात् कालवशे विश्वं न स विश्ववशे स्थितः॥

साकेतः केतनाग्रग्रथितविततसत्केतु चीनांशुकोद्य-
द्वातव्रातापनीत श्रमभरविहरन्मुग्धसिद्धाङ्गनौघः।
स्रोतस्विन्या सरय्वा प्रियसुवनितयेवाऽऽदरेणाऽनुकूलं
नित्यं गाढोपगूढः कलयतु स हितं श्रेयसा भूयसा वः॥९८॥

कालदेवतानुग्रहः पुण्यक्षेत्रादिसेवनं विना न सम्भवतीति पुण्यक्षेत्राणि प्रस्तौति - साकेत इत्यादिभिराग्रन्थान्तश्लोकैः॥ साकेत इति॥ साकेतः अयोध्यानगरी व युष्मभ्यं श्रेयः शुभं धर्मः मुक्तिर्वा त्रयं वा तेन सह हितं पथ्यं कलयतु ददातु।

केतनानां ध्वजानाम् । "केतनं ध्वज"मित्यमरः । अग्राणि शिरोभागाः । तत्र ग्रथितानि घटितानि विततानि विस्तृतानि । सत्केतवः समीचीनपताकाः "केतुर्नारुक्पताकारि ग्रहोत्पातेषु लक्ष्मणि" इति मेदिनी । तेषां यानि चीनांशुकानि पट्टवस्त्राणि तेभ्य-उद्यन्तः उत्पद्यमाना ये वाताः वायवः तेषां व्रातः समूहः तेनापनीतः निरस्तः श्रमभरः आयासातिशयो यस्य तादृशः । अत एव विहरन् क्रीडन् मुग्धः सुन्दरश्च । सिद्धाङ्गनानां सिद्धस्त्रीणाम् । सिद्धा देवयोनि विशेषाः । ओघः समूहो यस्य स तथोक्तः । अस्मिन् समासे श्रमहरेति पाठोऽनन्वितः । सरय्वा सरयूनाम्न्या स्रोतस्विन्या नद्या । प्रियमुवनितया प्रियपत्न्येव । उत्प्रेक्षा । अनुकूलं तीरसमीपे । यथेष्टमित्यर्थान्तरम् । "कूलं रोधश्च तीरं च" इत्यमरः । नित्यं सर्वदा । गाढं दृढम् "गाढबाढदृढानि च" इत्यमरः । उपगूढः आश्लिष्टः । "परिरम्भः परिष्वङ्गः संश्लेषउपगूहन" मित्यमरः । सरयूतीरे वर्तमान इति यावत् । तादृशः साकेतः । आकित्यत इत्याकेतः, आकेतेन सहितस्साकेत इति वाचस्पत्यम् । अयोध्या नगरी । भूयसा अतिशयतेन श्रेयसा शुभेन धर्मेण मुक्त्या वा त्रयेण वा । "श्रेयो मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत्" इति विश्वमेदिन्यौ । वः युष्मभ्यं कलयतु ददातु । कलिः कवीनां कामधेनुः ।

स्कान्दे वैष्णवखण्डे अयोध्यामाहात्म्ये अध्यायः ४. अयोध्यासदृशी क्वापि दृश्यते नापरा पुरी । या न स्पृशति वसुधां

विष्णुचक्रस्थिताऽनिशम् ॥ यस्यां स्थितो हरिः साक्षात्सेयं केनोपमी-
यते ॥

अध्याय:—१०. षष्टिर्वर्षसहस्राणि भागीरथ्यवगाहजम् ।
तत्फलं निमिषार्धेन कलौ दाशरथी पुरी ॥ निमिषं निमिषार्धं वा
प्राणिनां रामचिन्तनम् । संसारकारणाज्ञाननाशकं जायते ध्रुवम् ॥
यत्र कुत्रस्थितो यस्तु ह्ययोध्यां मनसा स्मरेत् । न तस्य पुनरावृत्तिः
कल्पान्तरशतैरपि ॥ जलरूपेण ब्रह्मैव सरयूर्मोक्षदा सदा । नैवात्र
कर्मणो भोगः रामरूपो भवेन्नरः ॥ पशुपक्षिमृगाश्चैव येचान्ये पाप-
योनय । तेऽपि मुक्ता दिवं यान्ति श्रीरामवचनं यथा ॥

**मोक्षद्वाराऽररंवो विघटयतु पुरीद्वारवत्यद्भुतश्री-**
**र्यत्रत्य स्त्रीजनानां जलविहृतिविधौ दीर्घिका पश्चिमाब्धिः ।**
**यां नित्यं ब्रह्मचारी यदुकुलतिलकः षोडशस्त्रीसहस्र-**
**क्रीडासन्तुष्टचेता नवनवविभवै पावयामास देवः ॥ ९९ ॥**

द्वारवती द्वारका वः युष्माकं मोक्षस्य मुक्तिसौधस्य द्वारं,
तस्य अररं कवाटं विघटयतु उद्घाटयतु ।

यत्र भवाः यत्रत्याः । अव्ययात्त्यबितित्यप् । ताश्चताः स्त्रियः
ता एव जनाः प्रजाः, तेषां जलविहृतिः जलक्रीडा तस्या विधिः
कृतिस्तथोक्तः । तस्मिन् जलविहारविषये पश्चिमाब्धिः पश्चिमसागरः
दीर्घिका वापीवेत्यर्थः । "वापी तु दीर्घिके" त्यत्यमरः । भवतीति

शेषः। नित्यब्रह्मचारी सदाब्रह्मचारी अस्खलित ब्रह्मचर्यवानित्यर्थः। यदोर्महाराजस्य यत्कुलं वंशः तस्य तिलकः भूषणायमानः। स्वावतारेण यदुवंशस्य अत्यन्तश्रेयोदायक इति भावः। षोडशस्त्रीसहस्रस्य नरकासुरनिर्बन्धादानीतानां षोडशसहस्रराजकन्यानां स्वदाराणां क्रीडाभिः जलक्रीडादिभिर्विहारैः। सन्तुष्ट भक्तानुग्रहबुध्या अत्यन्तं तुष्टं चेतः मनो यस्य स तथोक्तः। देवो भगवान् श्रीकृष्णः नवविभवैः नित्यनूतनैश्वर्यैः यां द्वारवतीं पावयामास पवित्रीचकार। सा द्वारवती द्वारकानगरी वः युष्माकं मोक्षस्य मोक्षसौधस्य द्वारं तस्य अररं कवाटम्। "कवाटमररं तुल्ये" इत्यमरः। विघटयतु उद्घाटयतु। मोक्षं ददात्विति भावः॥

श्रीमद्भागवते स्कन्धः १०. अध्यायः ३३. तासां रतिविहारेण श्रान्तानां वदनानि सः। प्रामृजत्करुणः प्रेम्णा शन्तमेनाङ्गपाणिना॥ ताभिर्युतः श्रममपोहितुमङ्गसङ्गघृष्टस्रजस्स्वकुच कुङ्कुमरञ्जितायाः। गन्धर्वपालिभिरनुद्रुत आविशद्वाः श्रान्तो गजीभिरिभराडिव भिन्नसेतुः॥ सोऽम्भस्यलं युवतिभिः परिषिच्यमानः रेमे स्वयं स्वरतिरत्र गजेन्द्रलीलः। ततश्च कृष्णोपवने जल स्थल प्रसून गन्धानिलजुष्टदिक्तटे। चचार भृङ्गप्रमदा गणाऽऽवृतो यथा मदान्धो द्विरदः करेणुभिः॥ आत्मन्येवावरुद्ध सौरतः सुरतरसः। रसो धातुः न तु स्खलितो यस्येति कामजयोक्तिरिति श्रीधरस्वामिव्याख्या। अनेन नित्य ब्रह्मचारित्वं सुव्यक्तं समर्थितम्॥

क्षेत्राणामुत्तमानामपि यदुपमया कापि लोके प्रशस्ति-
र्देहत्यागेन मुक्तिक्रय मभिलषतां याद्भुता पण्यवीथी ।
साक्षाद्विश्वेश्वरस्य त्रिभुवनमहिता या पुरी राजधानी
सेयं काशी सकाशी भवतु शुभकरा भुक्तये मुक्तये वः ॥

काशी वाराणसी वः युष्माकं भुक्तये भुक्त्यर्थं मुक्तये मोक्षार्थं च सकाशीभवतु समीपवर्तिनी भवतु ॥ उत्तमानां क्षेत्राणां पुण्यतीर्थानामपि यस्याः काश्याः उपमया सादृश्येन । श्रीकालहस्त्याऽऽदीनामियं दक्षिणकाशीत्यादिरीत्या लोके काऽपि विलक्षणा प्रशस्तिः प्रख्यातिः अस्ति । या काशी देहत्यागेन शरीरत्यागेन । शरीररूपमूल्यप्रदानेनेत्यर्थः । मुक्तेः मोक्षस्य क्रयः मूल्यप्रदानेन स्वायत्तीकरणं तथोक्तम् । तमभिलषतामपेक्षमाणानाम् अद्भुता आश्चर्यकरी दत्तान्मूल्यादधिकफलप्रदानात् । पण्यवीथी विपणिः । "विपणिः पण्यवीथिके"त्यमरः । भवतीति शेषः । तदुक्तं श्रीमच्छङ्करभगवत्पूज्यपाद विरचित काशीसारे—"अहो वाणिज्यजयसम्पत्तिः काशीपुरनिवासिनाम् । एकः पञ्चत्वमापन्नो जायते पुनरष्टधा" इति । या पुरी नगरी विश्वेश्वरस्य सकलजगदधीश्वरस्य श्रीविश्वनाथस्य । त्रयाणां भुवनानां समाहारस्त्रिभुवनं तेन महिता पूजिता तथोक्ता । साक्षाद्राजधानी प्रत्यक्षराजनगरी । तदुक्तं काशीखण्डे—"सा काशी त्रिपुरारिराजनगरी"ति । सेयम् एतादृशगुणमहिता । शुभं कल्याणं करोतीति शुभकरी । "कृञो हेतुताच्छील्यानुलोम्येष्विति टः ।

टित्वान्ङीप्। काशी वाराणसी वः युष्माकं भुक्तये भुक्त्यर्थम्। ऐहिकभोगार्थमित्यर्थः मुक्तये मोक्षाय च सा काशी भवतु आसन्ना भवतु। दूरस्थानामपि भुक्तिमुक्तिप्रदा भवत्विति भावः। काशीखण्डे पूर्वार्धे अध्यायः॥ १

भूमिष्ठापि नयाऽत्र भूस्त्रिदिवसोऽप्युच्चैरधस्थापि या। या बद्धा भुवि मुक्तिदा स्युरमृतं यस्यां मृता जन्तवः। या नित्यं त्रिजगत्पवित्र-तटिनीतीरे सुरैः सेव्यते। सा काशी त्रिपुरारिराजनगरी पायादपाया-ज्जगत्॥

अध्यायः—७. किं वर्ण्यते कैः किल काशिकेयं जन्तोः स्थितस्यात्र यतोऽन्तकाले। पचेलिमैः प्राक्तन पुण्यभारैः ओङ्कामोङ्कार यतीन्दुमौलिः॥ संसारि चिन्तामणिरत्र यस्मात्तं तारकं सज्जन-कर्णिकायाम्। शिवोऽभिधत्ते सह साऽन्तकाले तद्गीयतेऽसौ मणिक-र्णिकेति॥ न स्वः पुरी सा त्वनया पुरा समं समञ्जसापि प्रतिसाम्य-मावहेत्। जरायुजाण्डजोद्भिज्जाः स्वेदजाश्चात्र वासिनः। न समा मोक्षभाजस्ते त्रिदशैर्मुक्तिदुर्दशैः॥

स्मरिष्यन्तीह ये काशीमवश्यं तेऽपि साधवः। तेऽप्यघौघ-विनिर्मुक्ता यास्यन्ति गतिमुत्तमाम्॥ अपि काश्यां वसेद्यस्तु सर्वाऽशी सर्वविक्रयी। स यां गतिं लभेन्मर्त्यो यज्ञैर्दानैर्नसाऽन्यतः॥

प्रायश्चित्तेष्वघानामधिकलि कठिनेष्वल्पसामर्थ्यभाजां
निर्यत्नं मानवानामघततिदलने यो लघीयानुपायः ।
दूरादालोकमात्रादपहृतसकल ब्रह्महत्यो जगत्यां
कृच्छ्रात्सन्तारयेद्वः सपदि दुरितनिस्तारहेतुस्स सेतुः ॥ १०१ ॥

प्रायश्चित्तेष्विति । सेतुः श्रीरामचन्द्रेण दक्षिणसागरे कारितः सेतुः वः युष्मान् कृच्छ्रात् आपभ्द्य इत्यर्थः । सपदि तत्क्षणमेव तारयेत् उद्धरेत् ॥

यः सेतुः अघानां पापानां प्रायश्चित्तेषु पापपरिहरणोपायेषु कठिनेषु कष्टसाध्येषु सत्सु । अधिकलि कलौ युगे । अव्ययं विभक्तीत्यादिना सप्तम्यर्थेऽव्ययीभावः । अल्पं हीनं सामर्थ्यं शक्तिः । तद्भजन्ति सेवन्त इति तथोक्ताः । तेषां मानवानां सम्बन्धिनामघानां पापानां निर्यत्नं प्रयत्नेन विनैव अघततेः पापसमूहस्य दलनं नाशनं तथोक्तम् । तस्मिन् लघीयान् सुलभतरः उपायः भवतीति शेषः । जगत्यां लोके दूरात् आलोकमात्रात् दर्शनादेव अपहृताः नाशिताः सकलाः समस्ताः ब्रह्महत्याः ब्राह्मणहननादिजन्यपापानि येन स तथोक्तः । दुरितानां पापानां निस्तारः परिहरणं तस्य हेतुः कारणं तथोक्तः । समस्तपापपरिहर्ता सः सेतुः श्रीरामचन्द्रेण दक्षिणसागरे कारितः सेतुः । सपदि तत्क्षणमेव कृच्छ्रात् आपभ्द्य इत्यर्थः । वः युष्मान् सन्तारयेत् उद्धरेत् ॥ स्कान्दे ब्रह्मखण्डे अध्यायः ।

क्षेत्राणामपि सर्वेषां तीर्थानामपि चोत्तमम्। दृष्टमात्रे रामसेतौ मुक्तिः संसार सागरात्॥ सेतुं गच्छेति यो ब्रूयाद्यं कंचाऽपि नरं द्विजः। सोऽपि तत्फलमाप्नोति किमन्यैर्बहुभाषणैः॥ सेतुं रामेश्वरं लिङ्गं गन्धमादनपर्वतम्। चिन्तयन्मनुजस्सत्यं सर्वपापैः प्रमुच्यते॥ सेतुसैकतमध्ये यः शेते तत्पांसुकुण्ठितः। यावन्तः पांसवो लग्नास्तस्याङ्गे विप्रसत्तमाः॥ तावतां ब्रह्महत्यानां नाशः स्यान्नात्र संशयः सेतुस्नानेन धर्मः स्यात्सेतुस्नानादघक्षयः॥ सेतुस्नानं द्विजश्रेष्ठाः सर्वकामफलप्रदम्। समस्तदेवतारूपः सेतुबन्धः प्रकीर्तितः तद्दर्शनवतः पुंसः कः पुण्यं गणितुं क्षमः। अध्यायः- ३०. श्रीरामधनुषः कोटया यो रेखां पश्यते कृतम्। अनेकक्लेशसंयुक्तं गर्भवासं न पश्यति॥ मकरस्थे रवौ माघे धनुष्कोटौ तु यो नरः। स्नायात्पुण्यं निगदितुं तस्याऽहं न क्षमोद्विजाः॥

**कारुण्येन स्वयं यो वृषशिखरिपते स्तुङ्गमारुह्य श्रृङ्गं**
**क्लेशाम्भोराशिमज्जन्निखिलतनुभृतामुध्दृतौ बद्धबुद्धिः।**
**प्रत्यक्षीभूय साक्षात्प्रथयति भुवि यो देवलोला विलासान्**
**सोऽयं सन्त्रायतां वः परिहृतविनमत्सङ्कटो वेङ्कटेशः॥१०२॥**

वेङ्कटेशः वेङ्कटपतिः वः युष्मान् सन्त्रायतां संरक्षतु॥ यः वेङ्कटेशः कारुण्येन करुणया। स्वार्थे ष्यञ्। शिखरिणां पर्वतानाम्। "शिखरि क्ष्माभृदहार्य पर्वता" इत्यमरः पतिः श्रेष्ठ इत्यर्थः तथोक्तः। तस्य तुङ्गम् उन्नतं श्रृङ्गं शिखरम्। "कूटोऽस्त्री शिखरं

शृङ्गम्'' इत्यमरः। स्वयं परप्रेरणमन्तरा आरुह्य अधिष्ठाय। क्लेशाः दुःखान्येव अम्भोराशिः सागरः। परिणामो, मतान्तरे रूपकम्। तस्मिन् मज्जन्तः निमज्जन्तो निखिलाः समस्ता ये तनुभृतः देहधारिणः। क्विप् चेति भृञः क्विप्, तुक्। तेषाम् उध्दृतौ दुःखसागराद‍ुद्धरणे बद्धा कृता बुद्धिः निश्चयाऽऽत्मिका धीर्यस्य स तथोक्तः। अभूदिति शेषः। किञ्च यः वेङ्कटेशः साक्षात् निजस्वरूपेण प्रत्यक्षीभूय दृष्टिगोचरो भूत्वा। देवस्य स्वस्य लीलाः क्रीडाः विलासाः चेष्टाविशेषाश्च ते तथोक्ताः। तान् भक्तानुग्रहविशेषान् भुवि भूलोके प्रथयति प्रख्यापयति स्वप्नादिषु प्रत्यक्षीभूय नृणां स्वमहिमानं प्रकटयतीति सर्वाऽनुभवसिद्धम्। परिहृतानि निवारितानि विनमतां नमस्कुर्वतां नम्राणां सङ्कटानि कष्टानि येन स तथोक्तः। अनेन विशेषणेन लीलाविलासाः किञ्चिदिव सूचिताः। सोऽयं वेङ्कटेशः वेङ्कटपतिः वः युष्मान् सन्त्रायतां रक्षतात्॥ स्कान्दे वैष्णवखण्डे अध्यायः १. श्री वेङ्कटाचलो नाम वासुदेवालयो महान्। सप्तयोजन विस्तीर्णः शैलेन्द्रो योजनोच्छ्रितः॥ द्वापरे सिंहशैलं च कलौ श्री वेङ्कटाचलम्। प्रवदन्तीह विद्वांसः परमात्माऽऽलयं गिरिम्॥ ये स्मरन्ति महादेवं श्रीनिवासं विमुक्तिदम्। कीर्तयन्त्यथ वा विप्रास्ते मुक्ताः पापपञ्जरात्॥ वेङ्कटेशं परं देवं ये पश्यन्त्यर्चयन्ति वा। जन्म तेषां हि सफलं ते कृतार्थाश्च नेतरे॥ ये वाञ्छन्ति सदा भोगं राज्यं च त्रिदशाऽऽलये। वेङ्कटाद्रिनिवासं

ते प्रणमन्तु सकृन्मुदा ॥ भविष्योत्तरपुराणे वेङ्कटाचलमाहात्म्ये अध्यायः - १ पुरातु वृषभोनाम राक्षसो रूक्षकर्मकृतम् । आक्रम्य शेषशैलं च तापसानप्यबाधत ॥ तेन सङ्क्लिष्टतपसस्तदर्थं शरणं गताः । श्रीनिवासं हृषीकेशं भक्तानामभयप्रदम् ॥ तयोर्युद्धमभूत्तत्र वृषभश्रीनिवासयोः । हरिष्ये ते शिरः कायात् यथा पक्वफलं द्रुमात् । इत्युक्तो देवराजेन वृषभो दण्डवद्भुवि ॥ प्रणिपत्याऽऽह विश्वेशमस्तुवद्राक्षसेश्वरः । त्वच्चक्रेण हतो राजन् गच्छामि तव मन्दिरम् ॥ वरं ययाचे वृषभश्शैलो मदभिधोऽस्त्विति । समालिङ्ग्य भवेदेवमित्युक्तो हरिणाथ सः । विसृष्टचक्रसञ्छिन्नस्त्यक्तवान् स कलेबरम् ॥ तस्माद्वृषभशैलोऽयं कृते ख्यातिमुपेयिवान् ॥

**नूत्नैः प्रत्नैश्च रत्नै रुचि मतिरुचिरां बिभ्रती हन्त काञ्चि**
**त्काञ्ची काञ्चीव भूमे रनुपमवरदा यच्छतां वाञ्छितं वः ।**
**कामाक्षी यत्र कम्पासरितमनुसर त्यप्रकम्पाऽनुकम्पा**
**सम्पत्सम्पादितश्रीसुखितपुरजना नित्य मेकाम्रनाथा ॥ १०३ ॥**

नूत्नैरिति । काञ्ची तन्नामिका मोक्षपुरी वः युष्मभ्यं वाञ्छितम् अभिलषितं शुभं यच्छतां दद्यात् ॥ नूत्नैः नवैः । नवस्य नू आदेशः । " त्नप् तनप् खाश्च प्रत्यया वक्तव्या" इति त्नप्रत्ययः । प्रत्नैः पुरातनैः । "त्नश्च पुराणे प्रात्" इति प्रशब्दात् त्न प्रत्ययः । " प्रत्नपुरातन चिरन्तना" इत्यमरः । रत्नैः मणिभिः श्रेष्ठवस्तुभिश्च । काञ्चित् विलक्षणां रुचिंशोभां वहन्ती दधती ।

भूमेः भूदेवतायाः काञ्ची नाभिस्थानम्। भुवः परमिति पुराणवचनान्मेखलेव। उपमा। "मेखला काञ्ची" इत्यमरः। न विद्यन्ते उपमाः सुदृशवराः येषां ते तथोक्ताः। ते च ते वराः वाञ्छितानि तान् ददातीति तथोक्ता। यद्वा निरुपमा चासौ वरदा वरदासु देवीषु अनुपमा। यद्वा निरुपमः वरदः वरदराजस्वामी यस्यां सा। "आतोऽनुपसर्गे क" इति कः। किञ्च यत्र यस्यां काञ्च्यां प्रकम्पः चलनं न विद्यते यस्याः सा अप्रकम्पा दृढा या अनुकम्पा दया "कृपा दयाऽनुकम्पेत्यमरः। सैव सम्पत् विभवः। तया सम्पादिता आर्जिता या श्रीः ऐश्वर्यं, तया सुखिताः सुखवन्तः कृताः। सुखवन्तो वा। पुरेभवाजनाः पौराः यया सा तथोक्ता। वात्सल्यातिशयेन पौरेभ्योऽखण्डमैश्वर्यं ददतीति समासार्थः। एकाम्रः एकाम्रेश्वरः। नाथः पतिः यस्याः सा तथोक्ता। कामाक्षी तन्नामिका आदिशक्तिः। कम्पां तन्नाम्नीं सरितं, नित्यं सदा अनुवर्तते अनुसृत्याऽऽस्ते। सा काञ्ची तन्नाम्नी मोक्षपुरी नः युष्मभ्यं वाञ्छितम् अभिलषितं शुभं यच्छतां ददातु। दाण्धातोः परस्मैपदित्वेन यच्छतादिति पाठः साधुः। हन्तेति हर्षे।

स्कान्दे माहेश्वरखण्डे अरुणाचलमाहात्म्ये अध्यायौ ३, ४.

कदाचिद्रहसि प्रीता निजाज्ञावशवर्तिनम्। रमणं जानती मुग्धा पश्चादभ्येत्य सादरम्॥ कराभ्यां कमलाभाभ्यां त्रिणेत्राणि जगद्गुरोः। पिदधे लीलया शम्भोः किमेतदिति कौतुकात्॥ चन्द्रा-

दित्याग्निरूपेण पिहितेष्वक्षिषु क्रमात् । अन्धकारोऽभवत्तत्र चिरकालं भयङ्करः ॥ निमिषार्धेन देवस्य जग्मुर्वत्सरकोटयः । तमसा पूरितं विश्वमपारेण समन्ततः ॥ तपसा लब्धस्फूर्तीनां विचारः समपद्यत । देवी विनोदरूपेण पिधत्ते पुरहृद्दृशः ॥ न यज्ञाः सम्प्रवर्तन्ते न पूज्यन्ते सुरा भुवि । नित्यास्ते सूरयो भक्त्या शम्भुमानम्य तुष्टुवुः ॥ विरम प्रणयाऽऽरब्धा दमुष्माल्लोकसंक्षयात् । इति तेषां वचः श्रुत्वा भक्तानां सिद्धिशालिनाम् ॥ विसृजाऽक्षीणि गौरीति करुणा-मूर्तिरब्रवीत् । अविचारकृतान् मुग्धे भुवनक्षयकारणात् ॥ अयुक्तमिह पश्यामि जगन्मातुस्तवैव हि । इति शम्भोर्वचः श्रुत्वा धर्मलोपभया-ऽऽकुला ॥ किं करिष्यामि तच्छान्त्यै इत्यपृच्छच्च तं प्रिया । मन्मूर्तेस्तव केयं वा प्रायश्चित्तिरिहोच्यते ॥ तस्माल्लोकानुरूपं ते प्रायश्चित्तिरिहोच्यते । स्वामिना नाऽनुपाल्येत यदि त्याज्योऽनुजी-विभिः ॥ न त्वां विहाय शक्तोऽस्मि क्षणमप्यासितुं क्वचित् । अहमेव तपस्सर्वं करिष्याम्यात्मसंस्थितः ॥ कर्मभूमेस्त्वमाधिक्यहेतवे धर्ममाचर । अस्ति काञ्चीपुरी ख्याता सर्वभूतिसमन्विता ॥ यत्र क्लृप्तं तपः किञ्चिदनन्तफलमुच्यते । तत्र कम्पेति विख्याता महापातकनाशिनी ॥ यत्र स्थितानां मर्त्यानां कम्पन्ते पापकोटयः । तत्र चूतद्रुमश्चैको राजते नित्यपल्लवः ॥ तत्र जप्तं हुतं दत्त मनन्त-फलदं भवेत् ।

अहं च निष्कलो भूत्वा तव मानसपङ्कजे ॥ सन्निधास्यामि माभूस्त्वं देवि मद्विरहाऽऽकुला । इत्युक्त्वा देवदेवेन देवी कम्पान्तिकं ययौ ॥ तपः कर्तुं सखीयुक्ता विस्मयाऽऽक्रान्तलोचना । जजाप नियमोपेता शिवपञ्चाक्षरं परम् ॥ कृत्वा च सैकतं लिङ्गं पूजयामास सादरम् । अथ देवः शिवः साक्षात् संशोधयितुमम्बिकाम् ॥ कम्पानद्याः प्रवाहेण महता पर्यवेष्टयत् । अचिन्तयच्च सा देवी पूजाविघ्नसमाकुला ॥ लिङ्गनाशे विमोक्तव्यस्सद्भक्तैः प्राणसङ्ग्रहः । आलिङ्ग्य सुदृढं दोर्भ्या मेतल्लिङ्गमनाकुलम् ॥ अहं वत्स्यामि याताऽऽशु सख्यो यूयं विदूरतः । इत्युक्त्वा सैकतं लिङ्गं गाढमालिङ्ग्य साम्बिका ॥ न मुमोच प्रवाहेण वेष्ट्यमानापि वेगतः । स्तनचूचुकनिर्मग्न मुद्रादर्शितलाञ्छनम् ॥ महालिङ्गं स्वसंयुक्तं प्रणनाम तदाऽऽदरात् । अथ तामब्रवीत्कापि दैवी वागशरीरिणी ॥ त्वयाऽर्जितमिदं लिङ्गं सैकतं स्थिरवैभवम् । भविष्यति महाभागे वरदं सुरपूजितम् ॥ लिङ्गं चैतन्नमस्कृत्य कृतार्थास्सन्तु मानवाः । इति वाचं समाकर्ण्य निष्कलात् कथितां शिवात् ॥ तथेति सहसा देवी गन्तुं समुपचक्रमे । अवादीदम्बिकाऽऽलोक्य स्नेहपूर्णेन चक्षुषा ॥ सर्वकामप्रदानेन कामाक्षीति कामतः । मां प्रणम्यात्र मद्भक्ता लभन्तां वाञ्छितं परम् ॥ बिन्दुसरोवरम् :— ब्रह्मपुराणे अध्यायः ४१. लिङ्गकोटिसमायुक्तं वाराणसीसमं शुभम् । एकाम्रकेति विख्यातं तीर्थाष्टकसमन्वितम् ॥ पृथिव्यां यानि तीर्थानि सरितश्च सरांसि च । पुष्करिण्यस्तडाकानि

वाप्यः कूपाश्च सागराः ॥ तेभ्यः पूर्वं समाहृत्य जलबिन्दून् पृथक् पृथक् । सर्वलोकहितार्थाय रुद्रः सर्वसुरैः सह ॥ तीर्थं बिन्दुसरो नाम तस्मिन् क्षेत्रे द्विजोत्तमाः । चकार ऋषिभिस्सार्थं तेन बिन्दुसरः स्मृतम् ॥ अष्टम्यां बहुले पक्षे मार्गशीर्षे द्विजोत्तमाः । यस्तत्र यात्रां कुरुते विषुवे विजितेन्द्रियः ॥ विधिवद्बिन्दुसरसि स्नात्वा श्रद्धासमन्वितः । तिलोदकेन विधिना नामगोत्र विधानवित् ॥ स्नात्वैवं विधिवत्तत्र सोऽश्वमेधफलं लभेत् । चतुष्पथे श्मशाने वा यत्र कुत्र च तिष्ठति ॥ सम्पूज्य विधिवल्लिङ्गं देवदेवमुमापतिम् सर्वपापविनिर्मुक्तः शिवलोकं व्रजेन्नरः ॥ एकाम्रके शिवक्षेत्रे वाराणसीसमे शुभे । स्नानं करोति यस्तत्र मोक्षं स लभते ध्रुवम् ॥

पायाद्वः पुण्डरीकं शुभकनक सभाकर्णिकं व्याघ्रपाद-
व्यालेन्द्र प्रष्ठयोगिभ्रमर परिवृतं शैवगङ्गामरन्दम् ।
यस्मिन्नाकाशमध्य भ्रमण धृतरुचेर्भास्वतो लोकबन्धो
र्देवस्य प्रौढपादैः समुद्यति महान्नित्यमामोदयोगः ॥ १०४ ॥

पायादिति । पुण्डरीकं तन्नामकं चिदम्बरक्षेत्रं वः युष्मान् पायात् रक्षतात् ।

शुभा कल्याणप्रदा या कनकसभा अदभ्रसभेत्यपरनामा सभा । तत् क्षेत्रस्थ शिव ताण्डव सभेति भावः । सैव कर्णिका पद्मबीजकोशी यस्मिंस्तत्तथोक्तम् । "कर्णिका कर्णभूषणे । करिहस्ताङ्गुलौ पद्मबीजकोश्या"मित्यमरः । व्याघ्रपादः तन्नामा महर्षिः । व्यालेन्द्रः

सर्पराडादिशेषः। पतञ्जलिरिति यावत्। तौ प्रष्ठौ अग्रगामिनौ। "प्रष्ठोऽग्रगामिनी"ति निपातितः। येषां ते च ते योगिनः मुनयः त एव भ्रमराः द्विरेफाः। "द्विरेफपुष्पलिड् भृङ्गषट्पदभ्रमराऽऽलयः" इत्यमरः। तैः परिवृतं व्याप्तं तथोक्तम्। शैवगङ्गा नामकसरोवरमेव मरन्दः मकरन्दः यस्य तत् तथोक्तम्। पुण्डरीकं चिदम्बरक्षेत्रमेव सिताम्भोजम्। श्लिष्टरूपकम्। "पुण्डरीकं सिताऽम्भोजे पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि च" इति मेदिनी। पुण्डरीकपदेन व्याघ्रपुरीति नामान्तरं च सङ्गृहीतम्। वः युष्मान् पायात् रक्षतात् यस्मिन् चिदम्बरक्षेत्रे आकाशस्य "चिदम्बरं हृदाकाशं विश्वरूपस्य वेधस" इति पुराणवचनात् वेधसो हृदाकाशस्येत्यर्थः। गगनस्येत्यर्थान्तरम्। तस्य मध्ये यद्भ्रमणं ताण्डवः। सञ्चरणमित्यर्थान्तरम्। तेन धृता भृता या रुचिः कान्तिः येन स तथोक्तः। भास्वतः स्वप्रकाशस्य दिव्यतेजो विराजमानस्येत्यर्थान्तरम्। लोकबन्धोः सर्वलोकजनकस्य नटराजस्य। सूर्यस्येत्यर्थान्तरम्। प्रौढगादैः ताण्डवस्योद्धतनृत्यत्वात्तत्र स्वच्छन्दं सञ्चलद्भिरुद्धृतपादन्यासैरित्यर्थः। तीक्ष्णकिरणैरित्यर्थान्तरम्। महान् अधिकः आमोदस्य भक्तजनानामानन्दस्य। परिमलस्येत्यर्थान्तरम्। योगः सम्बन्धः तथोक्तः। नित्यं प्रत्यहं समुदयति सम्यगुदेति जायते, तत् पुण्डरीकक्षेत्रं वः पायादिति पूर्वेणान्वयः। चिदम्बरक्षेत्रे भक्तजना (मध्य हे) प्रत्यहं नटराजमहसा निर्धूतपापास्तत्ताण्डव मवेक्षमाणा निरन्तरं ब्रह्मानन्द सध्रीचीनमानन्दमनुभवन्तीति क्षेत्रपक्षे

भावः। सितपक्षपक्षे सूर्यस्याऽऽकाशमध्यभ्रमणेन पुण्डरीकस्य प्रत्यहं परिमलातिशयो भवतीति भावः। "दिनमणिः खद्योतो लोकबान्धव" इत्यमरः। "पादा रश्म्यङ्घ्रि तुर्यांशा" इत्यमरः। "आमोदः सोऽति निर्हारी"ति चामरः। साऽवयरूपकाऽलङ्कारः। स च श्लेषानुप्राणित इत्युभयोः सङ्करः।

चिदम्बरमाहात्म्ये अध्यायः ९. व्याघ्रपादः शिवं प्रति—पुष्पार्थं गच्छतः कल्ये तव पूजाविधायिनः। नियतं हस्तपादेषु व्याघ्ररूपं शिवाऽऽस्तु मे॥ नेत्रे च किञ्च मे स्यातां तत्र तस्यैव सुप्रभे। यथा पुरा महेशान तव पूजा कृता मया॥ व्याघ्ररूपधरेणापि तथैव क्रियतां सदा। अद्यारभ्य दयाऽऽधार मम नाम्ना पुरन्त्विदम्॥ ख्यातमस्तु समस्तेषु भुवनेष्वम्बिकापते। सुप्रसन्नमुखस्तस्मै ददौ हर्षेण शङ्करः॥ तदारभ्य मुनेस्तस्य तपोराशेर्महात्मनः। व्याघ्रपाद इति ख्यातिरासीदद्भुतकारिणी॥ अध्यायः १४. शेषं प्रति श्रीविष्णुः—अद्य प्रभृति योगीश शय्यारूपं विमुच्यताम्। धन्यो भवसि भूभारभरणो चन सुव्रत॥ सत्वरं त्वमितो गत्वा कुरु शेष महत्तपः। अध्यायः १५. तपस्यन्तं शेषं प्रति शिवः—

भूतलं च शरीरञ्च समं प्रोक्तं महामते। इडा तस्य महानाडी लङ्कां प्राप्नोति सन्ततम्॥ अन्या तु पिङ्गलानाम हिमवन्तमुपाश्रिता। तयोर्मध्ये गताया च सुषुम्नेति प्रकीर्तिता॥ प्राप्नोति सन्ततं तस्य मध्यं तिल्लवनस्य सा। भूतलस्यातिविस्तारा शोभिनः

पुरुषाकृतेः ॥ मूर्ध्नि श्रीपर्वतः प्रोक्तः फाले केदारपर्वतः। शिवस्यास्य महास्थानं कैलासशिखराह्वयम ॥ स्मृता वाराणसी शेष भ्रूमध्ये पुण्यवाहिनी। कुचस्थाने कुरुक्षेत्रं प्रयागो नाभिसंज्ञितः ॥

चिदम्बरन्तु हृन्मध्यमाधारः कमलालयः। तन्मध्ये विपुले विश्वे विमले ब्रह्मसन्निभे ॥ अस्ति लिङ्गं महच्छेष श्रीमूलस्थाननामकम्। तटाकमस्ति तत्राग्र्यं शिवगङ्गाभिधानकम् ॥ तस्य दक्षिणभागे तु नातिदूरे प्रभाविनी। अम्बराख्या सभा काचिदस्ति सर्वशुभाश्रया ॥ अभङ्गुरमहं तस्यां करोम्यानन्दताण्डवम्। चिदम्बरमिति ख्याता तस्मात्सा सर्ववन्दिता ॥ पतञ्जलिर्भूत्वा शेषः—

रत्नाकरेण सततं रत्नपुष्पैश्च मौक्तिकैः। अर्च्यमानोपकण्ठं तद्वीचीहस्तैर्मनोहरैः ॥ सर्वसिद्धिकरं श्रीमत्पुण्यं तिल्लवनं ययौ। व्याघ्रपादं मुनिं तत्र तपस्यन्तं व्यलोकयत् ॥ व्याघ्रपादं प्रति पतञ्जलिः—परमं भारते वर्षे भूमेर्हृदयपङ्कजम्। स्थानं तिल्लवनान्तस्थमस्ति सागरपार्श्वतः ॥ तत्र माध्यन्दिनस्साक्षान्मत्ताण्डवदिदृक्षया। व्याघ्रपाद इति ख्यातस्तपश्चरति दुष्करम् ॥ तव तत्रापि तस्याहं दर्शयिष्यामि ताण्डवम्। निर्गत्य पूर्णज्ञानेन साकं तेन महात्मना ॥ तत्राऽऽस्वेति समादिश्य शङ्करो मां व्यसर्जयत्। पतञ्जलिं प्रति व्याघ्रपादः—अत्रिर्नाम महातेजाः पुरा दिव्यस्तपोधनः। अनसूया च तत्पत्नी पुत्रं त्वां प्राप्तुमिच्छया ॥ कमलाऽक्षमजं विष्णुं द्वाव-पूजयतां चिरम्। तत्पत्न्याः स्नानशुद्धाया दृष्टोऽभूस्त्वं कराञ्जलौ।

पुत्राभिलाषिण्यपि सा करस्थं बालरूपिणम् ॥ विलोक्य सहसा भीता त्वाममुञ्चन्महीतले । पतञ्जलिसमाख्योऽभूत्तदा तत्पतनाद्भुवि ॥
अध्यायः—१७.

लोकचूडामणौ मध्यमह्नः प्राप्ते दिवाकरे । निरीयतुर्मुनी तस्मादाश्रमात्प्रीतमानसौ ॥ अत्रान्तरे जगत्स्वामी प्रणवात्मा नटेश्वरः । आयात इति तत्रोच्चैर्दध्मतुः काहलादयः ॥ वाचामगोचराकारे तस्मिन्नद्भुत संसदि । चिदम्बरसभामध्ये शिवसायुज्यकारिणि ॥ स्थापितैकपदाम्भोजं निश्चलं वागगोचरम् । तिर्यक्कुञ्चितवामाङ्घ्रि लसन्माणिक्यनूपुरम् ॥ किञ्चिदाकुञ्चितोद्भासि वामपाणि सरोरुहम् । दृष्ट्वा ततश्च तत्पार्श्वे शिवां परमसुन्दरीम् ॥ शिवस्य नटराजस्य शक्तिं पृथगिव स्थिताम् । ताञ्च तत्र तपस्यन्तावृषी दृष्टावपश्यताम् ॥ दृष्ट्वा तदद्भुतं शम्भोस्तौ तत्रानन्दताण्डवम् । आनन्दातिशयात्किञ्चिदज्ञासिष्टां न च क्षणम् ॥ साष्टाङ्गमङ्घ्रिषु तयो स्तावृषी सम्प्रणेमतुः ॥ अनन्तकामफलदादखिलाऽमरदुर्लभात् । अपवर्गप्रदादस्मादस्मत्ताण्डवदर्शनात् ॥ सर्वे भवन्तु सुखिनस्सर्वे सन्तु जितैनसः । इति कृत्वा दयाम्भोधिश्चित्ते सङ्कल्पमीश्वरः ॥ तदानीं दर्शयामास सर्वेषां तत्र ताण्डवम् ॥

मूलाधारः पृथिव्या जगति पशुपते र्जन्मभूरुत्सवानां
पायाल्लक्ष्मीपुरी वो वलयितपरिखाऽऽकारपूर्वाम्बुराशिः ।
यत्सौन्दर्याऽभिलाषात् त्रिदशपतिगृहं हन्त सन्त्यज्य तादृग्देवानामादिदेव स्सकुतुकमत्रनीमागतस्त्यागराजः ॥ १०५ ॥

मूलाधार इति। लक्ष्मीपुरी कमलालयेति नामान्तरा पुरी वः युष्मान् पायात् अवतात्।

पृथिव्याः भूमेः मूलाधारः नाभेरधः प्रदेशः तत्सदृश इत्यर्थः। जगति भूलोके पशुपतेः सदाशिवस्य सम्बन्धिनाम्। "शम्भुरीशः पशुपति"रित्यमरः। उत्सवानां महसाम्। "मह उद्धव उत्सव" इत्यमरः। जन्मभूः उत्पत्तिस्थानम्। महान्तः शिवोत्सवा अत्र प्रचलन्तीति भावः। वलयिता परित आवृता या परिखा खेयम्। "खेयन्तु परिरखे"त्यमरः। तस्या आकार इवाऽऽकारो यस्य स पूर्वाम्बुराशिः प्राक्समुद्रो यस्य स तथोक्तः। यस्या लक्ष्मीपुर्याः सौन्दर्यं चारुता। सुन्दरं चारु सुषम"मित्यमरः। तस्मिन्नभिलाषः काङ्क्षा तथोक्ता। तस्मात् तादृक् अखण्डैश्वर्यसम्पन्नं त्रिदशपतेः इन्द्रस्य गृहं मन्दिरं तथोक्तम्। तत् सन्त्यज्य परित्यज्य। देवानां सुराणाम्। आदिदेवः प्रथमोदेवः। अनादिरिति भावः। त्यागराजः तन्नामकः सदाशिवः। सकुतुकं सकुतूहलम्। "कुतुकन्तु कुतूहल"मित्यमरः। अवनीं भूलोकम् आगतः आगच्छत्। सा लक्ष्मीपुरी वः युष्मान् पायात् अवतात्॥

कामिकागमे—कारणेशपरित्यागाद्राजते यः परः शिवः। स एव त्यागराजाख्यस्सर्वकामार्थसिद्धिदः॥ हालास्य माहात्म्ये अध्यायः १०. मूलाधारं विरिञ्चेश्च प्रथितं कमलालयम्। अहमेव त्यागराजस्तत्र तिष्ठामि सादरम्॥ स्कान्दे शङ्करसंहितायां शिवर-

हस्यखण्डे देवकाण्डे अध्यायः- ७. समाप्य पूजामिन्द्रोऽपि प्रस्थितो भूभुजा सह । (भूभुजा---मुचुकुन्देन)

प्राप्य भोजनशालां स्वां कामधेनुमचिन्तयत् ॥ भोजयित्वा तया दत्तमन्नं दिव्यं पयोयुतम् । दापयित्वा विभूषाश्च वस्त्राण्यपि महीभुजे॥ पप्रच्छभूयो भूयोऽथ वाञ्छितंवद हे नृप । इति प्रेम्णा सुरेशानो मुचुकुन्दं महीसुरः ॥ तच्छ्रुत्वा स महीपालस्सन्तोषेण युतस्तदा । पप्रच्छ साम्बमीशानं त्वया मे शक्र पूजितम् ॥ तमेनं परमेशानं पूजयिष्यामि भक्तिमान् । निशम्यैतत् सुरेशोऽपि विचारेण महीयसा ॥ प्राह वाचममुं वीक्ष्य न मदीयो महेश्वरः । विष्णुनाऽऽराधितो देवः सत्य-मुक्तं मया नृपप ॥........गत्वाऽहं मत्पुरं रम्यं तदाऽऽरभ्य महेश्व-रम् । उमया सहितं देव मभ्याशगुहमव्ययम् ॥ अर्चयाम्यमुमीशान मनन्यमनसा नृप । तद्दातुं माधवस्यैनमप्राप्याऽनुमतिं पराम् ॥ न शक्यते नृपश्रेष्ठ विष्णोरमिततेजसः । इति तस्य वचः श्रुत्वा मुचु-कुन्दो महानृपः ॥ विष्णोरभ्याशमाप्याऽयमुक्त्वैतदखिलं वचः । प्राप्ताऽनुज्ञस्समागत्य सुराणमधिप पुनः ॥ विष्णोरनुज्ञा सम्प्राप्ता मया देववराऽधुना । तद्दातुमर्हति भवान् परमेशं सुरेश्वर ॥ इत्युक्तिमस्य संश्रुत्य विचारेण महीयसा । विमना दातुमीशानं सोमास्कन्दं द्विजो त्तमाः ॥ त्वष्ट्राशु निर्मितानन्यान् षडस्य सदृशान् वरान् । प्रादात् क्रमेण देवेशो विग्रहान् भूमिजे तदा ॥ विलोक्य तानयं ज्ञाता कपटं च शतक्रतोः । ततः प्रादात्सुरेशोऽस्य तं देवं परया मुदा ॥

गृहीत्वाऽथ महादेवं मुचुकुन्दो नृपोत्तमः। कमलालयमागत्य स्थलानामुत्तमोत्तमम् ॥ प्रतिष्ठाय विधानेन चक्रे पूजोत्सवाऽऽदिभिः। महोपचारं देवस्य सोमास्कन्दस्य भक्तिमान् ॥ तत्समीपपुरेष्वन्यानिविग्रहान् षडपि द्विजाः। अपूजयन्महात्माऽयमवनीशो द्विजोत्तमाः ॥

**पायान्मध्यार्जुनं वः सकृदपि भजतां मोक्षदं श्रीनटेश-**
**त्यागेशस्वामिनाथस्थलमतिमहितं यस्य शेषं वदन्ति।**
**मान्धातुर्यत्र तिष्ठञ्छ्रियमतिविपुलां क्षेत्रवर्ये कवेः श्री**
**वाञ्छानाथस्य चाऽदात् फलमपि सकलं श्री महालिङ्गमूर्तिः ॥**

इति श्रीवाञ्छेश्वर महाकवि विरचित माशीर्वाद शतकम् पायादिति। मध्यार्जुनं तन्नामकं क्षेत्रं वः युष्मान् पायात् रक्षतु।

अतिमहितम् अत्यन्तं पूजितम्। श्रीनटेशः चिदम्बरनटराजस्वामी। त्यागेशः कमलालयक्षेत्राधीशः। स्वामिनाथः कुमारस्वामी चेति तथोक्ताः। तेषां स्थलं क्षेत्राणीत्यर्थः। यस्य मध्यार्जुनक्षेत्रस्य शेषं शेषाणि वदन्ति। विज्ञा इति शेषः। यत्र मध्यार्जुने मान्धातुः तन्नामक चक्रवर्तिनः सम्बन्धिनि क्षेत्रवर्ये तीर्थश्रेष्ठे। तिष्ठन् वसन् श्रीमहालिङ्गमूर्तिः। श्रीवाञ्छनाथस्य एतन्नामकस्य प्रकृतग्रन्थकर्तुः कवेः। सम्प्रदानस्य शेषत्वविवक्षया षष्ठी। अति विपुलाम् अति महतीं श्रियम् ऐश्वर्यं सकलं चतुर्विधमपि फलं पुरुषार्थम्। अदात् अयच्छत् यत्तदोर्नित्यसम्बन्धात्तदित्यध्याहार्यम्। तत् पूर्वोक्तविशेषणविशिष्टं सकृदपि एकदैवाऽपि भजतां सेवमानानां, मोक्षं ददातीति मोक्षद

मुक्तिप्रदम्। "आतोऽनुपसर्गेक" इति कः। मध्यार्जुनं तन्नामकं महाक्षेत्रं वः युष्मान् पायात् रक्षतु।

मध्यार्जुन माहात्म्ये अध्यायः ३. हृत्पुण्डरीकान्तर मादिशक्ते स्तन्मध्यशब्देन तु लक्षितं हि। नैर्मल्यमस्यार्जुन शब्दलक्षितं तस्माद्धि मध्यार्जुनमाहुरार्याः॥ तथा ह्युमाया हृदयाब्जमध्ये सुनिर्मले सन्निहितस्समाधौ। तस्माद्धि यस्मिन्नुदितो विभाति हृदब्जतुल्यं तदभूत्स्थलं च॥ तस्मिंश्च मध्यार्जुनधाम्नि रम्ये मुनीश्वराणां च तपोऽधिकृत्य। प्राप्तं भवान्याश्च भवस्य वृत्तमाख्यायते सम्प्रति विस्तरेण॥ प्रीतिं विधातुं निजधर्मपत्न्या योगेन लिङ्गाकृतिराविरासीत्। लिङ्गाद्धि तस्माद् द्युमणिप्रभावात् वपुष्मती काचन मूलसंवित्॥ हृदि स्थिते वाऽऽविरभूदुमायाः सगाधिसम्पन्निगम प्रसिद्धा। तदादिमल्लिङ्गवरं कदाचिन्मध्येऽर्जुनानां मुनिनोपलब्धम्॥ ततश्च मध्यार्जुन संज्ञया तत् प्रख्यापितं रोमशतापसेन॥

अध्यायः—१५. ध्यानानुरूपो भगवान् भवान्या लिङ्गात्मना प्रादुरभूत्तदानीम्। प्रज्ञाघनं लिङ्गमवेक्ष्य पूर्वं तद्व्यञ्जकं मूर्तिवपुश्च वीक्ष्य॥ मनोरथावाप्ति सुखप्रवाहे विगाह्य हृत्स्थं विजहुः स्वतापम्॥ हृत्पुण्डरीकवत्स्वच्छे थानेऽस्मिन्नतिनिर्मले। लिङ्गं प्रतिष्ठितं यस्मात्तस्मान्मध्यार्जुनं विदुः॥ अध्यायः—३१-५१. बृहत्कुचाम्बारमणं यः परिक्रमते सकृत्। सोऽश्वमेधसहस्रस्य फलमाप्नोत्यसंशयम्॥

अध्यायः—१. एतेषु पुण्यस्थानेषु मध्यार्जुनमनुत्तमम् । यत्र प्रवेशमात्रेण महापापैः प्रमुच्यते ॥ अयत्नात् प्राप्यतेऽभीष्टं पुंसां यन्मनसेप्सितम् । मुमुक्षूणां च मोक्षश्री स्त त्राऽऽस्ते शिवधामनि ॥ अध्यायः ५७. मान्धातुश्चपिता पूर्वमपुत्रो मुनिभि परैः । जात्वश्वमेधिकं शम्भोश्चकाराऽथ प्रदक्षिणम् ॥ मध्यार्जुनेशसान्निध्ये पुत्रीयात्पुत्रकारणात् । चचार विधिवद्राजा व्रतेनाऽनशनेन सः ॥ परितस्तस्य वै राज्ञो द्विजाः शयनमाचरन् । घटान्संस्थापयन्पूर्वं तन्मध्ये पु त्रयं घटम् ॥ स्थापितं द्विजसङ्घैश्च प्रभाते दातुमुद्यतैः । एतस्य नृपवर्यस्य तत्पानेन सुतो भवेत् ॥ एतस्मिन्नन्तरे राजा क्षुतृड्भ्यां परिपीडितः । निद्रागतेषु सर्वेषु द्विजेषु नृपसत्तमः ॥ शयनादुत्थितो भूत्वा पुत्रीयं मध्यमं घटम् । समादाय च निश्शेषं पीतं राज्ञा तदा द्विजाः ॥ सद्यो गर्भो बभूवाऽथ युवनाश्वस्य भूपतेः । स्फोटयित्वा तदुदरं मान्धाता स ह्ययोनिजः ॥ यज्ञे दृष्ट्वा तमाश्चर्यं देवास्सेन्द्रपुरोगमाः । साधु साध्विति सम्प्रोचुर्मान्धातेत्यवदन्सुराः ॥ ईश्वरांशसमुद्भूतो मान्धाता च न संशयः । ततो राजा स्वमुदरं स्फुटितं सम्भ्रमाऽऽतुरः ॥ दृष्ट्वा दैवं महालिङ्गं प्रार्थयामास खिन्नधीः । महाश्वमेधिकं शम्भोः प्रदक्षिणमथाकरोत् ॥ वसिष्ठस्योपदेशेन ततोसौ विरुजोऽभवत् । तस्मान्महाश्वमेधाख्यं त्रिषु लोकेषु विश्रुतम् ॥

अध्यायः ६२. स्वस्य दक्षिणभागं तु भवान्याः शङ्करो ददौ । तदा प्रभृति तत्क्षेत्रे दक्षिणाङ्गी बभूव सा ॥ अध्यायः ५८. येऽभि[द्रु]त्य महाभाग पलायनपरान् रिपून् घ्नन्ति । ते

नारकामूत्वा उलूकाश्च भवन्ति हि ॥ हन्यन्ते यदि ते सैन्यैः तत्पापा नृपमेव तु । बाधयन्ति न सन्देहः सत्यमेव हि शौनकः । तस्मादस्य महोन्मादो बभूवाऽथ नृपस्य हि ॥ तथा तं भ्रमितं दृष्ट्वा मान्धातारं नृपोत्तमम् । सेनाध्यक्षा विधेः पुत्रं वसिष्ठं तत्पुरोहितम् ॥ वसिष्ठः—कावेर्या दक्षिणे तीरे क्षेत्रं शैववरं शुभम् । मध्यार्जुनमिति ख्यातं त्रिषु लोकेषु दुर्लभम् ॥ तत्रैनं प्रापयित्वाशु महालिङ्गस्य सन्निधिम् । द्विजैः सह सुसङ्कल्प्य राजा हेरम्बसन्निधौ ॥ महाश्वमेधिकं नाम्ना सर्वपाप प्रणाशनम् । प्रदक्षिणं करोत्वद्धा तेन हत्याशमो भवेत् ॥ प्रापयित्वाऽऽशु राजानं क्षेत्रं मध्यर्जुनाह्वयम् । कावेर्यां चैव कल्याणतीर्थे मङ्गलदायके ॥ पौष्ये तं स्नपयामासुस्तस्मिन्नेव प्रदक्षिणम् । महाश्वमेधिकं शम्भो कारयामासुरञ्जसा ॥ तत्क्षणाद्यौवनाश्वोऽपि हत्याभिश्च वियोजितः । यानि यानि तु जीर्णानि मध्यार्जुनपते गृहे ॥ तानि तानि च मान्धात्रा उद्धृतानि महाप्रभोः ॥

इति कृपा श्रीयाञ्जनेय शास्त्रि रचिता
सुधासाराख्याऽऽशीर्वाद शतक व्याख्याः
इति शम्